# श्रीमद्भगवद्गीता ।

श्रीपं०पुरुषोत्तमदासरचितटीकासहिता ।

या हि

शिमलाप्रान्तार्गतविलासपुराधिपतेः श्री-
मतो राज्ञो विजयचन्द्रवर्म्मणोऽनुज्ञया



काश्यां भारतजीवननाम्नि यन्त्रालये मुद्रिता ।

संवत् १९६१ ।

श्रीगणेशाय नमः ।

गणाधिपं नमस्कृत्य विघ्नविच्छेदकारकम् ।
सरस्वतीं सदा नौमि यया वाणी प्रवर्त्तते ॥१॥

मुनिशशाङ्कसुमेदिनिवत्सरे
सुपुरुषोत्तमदासवरेण च ।
मकरराशिगते रविनन्दने
सुरचिता भगवत्पदसूचिका ॥२॥

न शोभते ज्ञानमयी सुगीता
व्याख्यां विना मानुषवाग्विलासां ।
अतो महाभागवतेन राज्ञा
श्रीविजयचन्द्रेण प्रकाश्यते च ॥३॥

यन्त्रालये भारतपूर्वकेण
श्रीजीवनाख्येन सुलेखिता च ।
श्लोका मदीया घटितापशब्दा-
जल्पन्तु मूर्खा विलपन्तु पण्डिताः ॥४॥

सदा सेव्या गीता बुधजनसमाजेन सहि
सुरक्ष्या पोष्या च परमपदवी या नपथगा।
मया राजाज्ञाया रचितरससंख्याकभव्याः
सुश्लोकाः पठनीयाः सरलगतिकैः पण्डितज

---

काश्यां सुधीर्भारतजीवनालये
श्रीरामकृष्णोऽपि चकार यन्त्रम् ।
तस्मै मया प्रार्थनयावगम्यते
सुलेखनीया भगवत्प्रकाशिका ॥ ६ ॥



स्त

पे अथ भगवद्गीता प्रारभ्यते ॥

स्म

गु ॐ श्रीकृष्णपरमात्मने नमो नमः ।

वे ॐ अस्य श्रीभगवद्गीतामालामन्त्रस्य श्री-
'वान् वेदव्यासऋषिरनुष्टप्छन्दः श्रीकृष्ण-
परमात्मा देवता ।

अथ टीका ।

कपरमात्मातत्वनिर्णयो निरालम्बोपनिषदेन कथितः ।

अथ परमात्मा नाम ।

देहादेपरतत्वाद्ब्रह्मैव परमात्मा स ब्रह्मा स विष्णुः स रुद्रः स इन्द्रः सहास्यमनः स सूर्य्यः स चन्द्रमाः ते सुराः तेऽसुराः ते पिशाचाः ते मनुष्याः ताः स्त्रियः ते पश्वादयः सः स्थावरः ते ब्राह्मणादयः सर्वं खल्विदं ब्रह्म नेहनानास्ति किञ्चन पुनः श्रियमयत्वात् मृत्केवलं सत्यं वाचारम्भनविकारनामधेयं सत्यं शुद्धं शिवं शान्तमेकं न द्वितीयोस्ति इत्युक्तश्रुतिप्रमाणेन सगुणोपासनायां सप्तमाध्यायेपि बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते वासुदेवसर्वमिति स महात्मा सुदुर्लभः इत्येवं वर्णितं अथ निर्गुणोपासनायां श्रुति

आत्मा उपनिषदेनाह अथैवां गिरां त्रिविधः पुरुषस्त-
द्यथा वाह्यात्मा अन्तरात्मा परमात्माचेति ।

अथ परमात्मा नाम ।

अक्षरमुपासनीयं यथासने उपविश्य प्राणायामप्र-
त्याहारधारणाध्यानसमाधियोगानुमानाध्यात्मचिंतक-
चटुकर्णिकस्य तदुलवालाग्रवासतसहस्रविकल्पना दि-
भिर्न लभ्यते नोपलभ्यते न जायते न मृयते न
शुष्यते न दह्यते न कम्पते निर्गुणः साक्षीभूतः शुद्धो
निरवयवो आत्मा केवलं सूक्ष्मो नित्यक्षरो निर्वि-
कल्पो निरञ्जनो निष्कलो निष्कलंको निरभिमानः
शब्दस्पर्शरूपरसगन्धवर्जितः निराकांक्षः सर्वव्यापी-
सोचिंत्योवर्णश्च पुनाति शुद्धानि पूतानि श्रूयते संस्का-
रोनास्ति संस्कारोनास्तीति इत्येषः परमात्मा पुरुषनाम
इत्येवं निर्गुणोपासनायां पंचदशाध्यायेक्षर अक्षराती-
तनामपुरुषद्वयातीतपुरुषोत्तमरूपेण वर्णितः इत्युक्तप्र-
काराभ्यां सगुणो निर्गुणोपि कैवल्यरूपं प्रतीयते तद्य-
थाह सगुणं ब्रह्म उक्तविशेषणानि निजरूपे लीनंकृत्वा
निर्गुणो भवति स एव तानि विशेषणानि प्रादुर्कुर्वन्स-
न्सगुणो भवति अत्र प्रमाणं "एतद्योनीनि भूतानि स-
र्वाणीत्युपधारय अहं कृत्स्नस्य जगतः प्रभवः प्रलय-

स्तथा" १ इति सप्तमे अत एव निर्गुणब्रह्मान्तर्यामिरू-
पेण वेदव्यासमुखद्वारेण यद्गीताशास्त्रं प्रकाशितं त-
स्मादेव वेदव्यासऋषिः इति कथितं तदेव शास्त्रं स-
गुणब्रह्मरूपेण श्रीकृष्णेन अर्जुनं प्रति ज्ञानोपदेशाय नि-
वेदितं तस्माद्भगवद्गीता इति विख्यातं। अनुष्टप्छन्दः
नाम अ उष्टप् अनुष्टप् उष्णरहित इत्यर्थः उष्णं धनजन-
लोकतया ईर्षारूपं येनांऽकरणे तप्यते तदुष्णनिवारि-
कोनाम अनुष्टप्छंदः यद्यपि गीताशास्त्रे अन्यान्यपि
बहुविधानि छंदांसि सन्ति तथापि ईर्षारूपोष्णनिवा-
रिकत्वादनुष्टप्छंद इत्येवमुक्तं तदुष्णं। द्विजातिसंस्का-
रेण युक्तबोधेन निवर्तते द्विजातिसंस्कारो मन्त्रेण भ-
वति तन्मंत्रमेव मालारूपं भवति यथा माला शरीरस्य
भूषणं तथा मंत्रमपि न्यासादिरूपेण भूषणं भवति
तद्यथाह अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषस
इति बीजम्, सर्वधर्मान्परित्यज्यमामेकं शरणं व्रजेति
शक्तिः अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचेति
कीलकम्, नैनं छिंदन्ति शस्त्राणि नैनं दहति पावक
इत्यंगुष्ठाभ्यां नमः, न चैनं क्लेदयन्त्यापो न शोषयति
मारुत इति तर्जनीभ्यां नमः, अछेद्योयमदाह्योयम-
क्लेद्योऽशोष्य एव च इति मध्यमाभ्यां नमः, नित्यः स-

र्वगतःस्थाणुरचलोयं सनातन इत्यनामिकाभ्यां नमः, पश्य मे पार्थ रूपाणि शतशोथसहस्रश इति कनिष्ठिकाभ्यां नमः, नानाविधानि दिव्यानि नानावर्णाकृतीनि चेति करतलकरपृष्ठाभ्यां नमः, इति करन्यासः अथ हृदयादिन्यासः। नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावक इति हृदयाय नमः, न चैनं क्लेदयंत्यापो न शोषयाति मारुत इति शिरसे स्वाहा, अच्छेद्योयमदाह्योयमक्लेद्योऽशोष्य एवचेति शिखायै वषट्, नित्यः सर्वगतःस्थाणुरचलोयं सनातन इति कवचाय हुं, पश्य मे पार्थ रूपाणि शतशोथसहस्रश इति नेत्रत्रयाय वौषट्, नानाविधानि दिव्यानि नानावर्णाकृतीनि चेत्यस्त्रायफट्, श्रीकृष्णप्रीत्यर्थे पाठे विनियोगः अथ टीका। उक्तमन्त्रादीनां न्यासादिद्वारा सूक्ष्मशरीरं मन्त्ररूपं भवेत् प्रमाणं श्रीभागवते नारायणकवचे वेकारं नेत्रयोर्युंज्यान्नकारं सर्वसन्धिषु मकारमस्त्रमुद्दिश्य मन्त्रमूर्तिभवेद्बुधः एवं प्रकारेण द्विजातिसंस्कारो भवेत्, तद्यथाह जन्मना जायते शूद्रः संस्कारे द्विजोच्यते, वेदपाठीभवेद्विप्रः ब्रह्म जानाति ब्राह्मणः, तद्ब्रह्मरूपं दर्शितं। पार्थेति—

॥ श्लोक ॥

पार्थाय प्रतिबोधितां भगवता नारायणेन स्वयं
व्यासेन ग्रथितां पुराणमुनिना मध्ये महाभारते।

अद्वैतामृतवर्षिणीं भगवतीमष्टादशाध्यायनी-
मम्बस्त्वामनुसंदधामिभगवद्गीतेभवद्वेषिणीम्॥१॥

॥ अथ टीका ॥

इत्येवं अद्वैतामृतब्रह्म कैवल्यरूपः यथा पूर्वोक्तप्रकारेण सगुणमतेपि कैवल्यस्वरूपो ब्रह्म दर्शितः च पुनः निर्गुणमतेपि कैवल्यस्वरूपो ब्रह्मदर्शितः अतएव अद्वैतामृतरूपः कैवल्यब्रह्मविज्ञापनीय इत्युक्तप्रकारेण यः ब्रह्म जानाति स एव ब्राह्मणो ज्ञेयः अत्र गीतायामष्टादशाध्यायेषु अद्वैतामृतब्रह्मएव निरूपितः सा एव गीता संजयेन धृतराष्ट्रं प्रति कथिता तत्र संजयोक्तमङ्गलाचरणं । नमोस्तुते—

॥ इति श्लोक ॥

नमोस्तुते व्यास विशालबुद्धे
फुल्लारविन्दायतपत्रनेत्र ।
येन त्वया भारततैलपूर्णः
प्रज्वालितो ज्ञानमयः प्रदीपः॥ २ ॥

॥ टीका ॥

भाति प्रकाशयतीति भा अर्थात्सर्वप्रकाशको ब्रह्म अत्र प्रमाणं आदित्यवर्णं तमसःपरस्तात् इति तस्मिन् ब्रह्मणि यत् रतिः स एव तैलः तद्रतियुक्तोज-

ज्ञासुस्वरूप अर्जुनएव वर्तिकारूपो ज्ञेयः तदुत्तरवादी श्रीकृष्णएव अग्निरूपः उक्त अनुसन्धानपूर्वको एष ज्ञानमयप्रदीपः यथा गृहवत् देहावरणयुक्तमन्तष्करणं प्रकाशयति इत्यर्थः ॥ २ ॥

इत्येवं ग्रन्थकर्तारं नमस्कृत्य इदानीं अग्निरूपमुपदेशकं श्रीकृष्णं नमस्करोति । प्रपन्नेति—

॥ श्लोक ॥

प्रपन्नपारिजाताय तोत्रवेत्रैकपाणये ।
ज्ञानमुद्राय कृष्णाय गीतामृतदुहे नमः ॥३॥

॥ टीका ॥

प्रपन्नस्य शरणागतस्य पारिजातरूपः धर्मादिचतुर्वर्गफलदायिकः तद्रूपमेव दर्शितं अर्जुनस्य सारथित्वं स एव अर्जुनो नररूपःसारथीरूपः श्रीकृष्णनारायणरूपः तौ उभौ यथा नृसिंहरूपेण साक्षादेकत्रमेव दर्शितं तथान्तर्य्यामिरूपेण वर्ततेऽत्र प्रमाणं न यस्य सख्यं पुरुषो वेत्ति सैख्यः सखारूपेण वसतः पुरेस्मिन् गुणो यथा गुणिनो व्यक्तदृष्टेस्तस्मै महेशाय नमस्करोमि १ इत्युक्तसैख्यसखारूपौ अर्जुनरथसारथिरूपेण दर्शितं तोत्रनाम हयरस्मिः अर्थात् नररूपजीवस्य देहरूपं रथं तत्र अन्तष्करणचतुष्टयां घो-

टकरूपा ज्ञेयाः तत्रार्जुनस्य श्वेतवर्णा वाहनाः करी-
टी श्वेतवाहन इति प्रसिद्धनामत्वात् शुक्लवर्णाः अश्वाः
अतएवांष्करणरूपा घोटका अपि जाग्रतसमये शु-
क्लरूपा भवन्तः तेषां रस्मिरूपाः पञ्चप्राणा ज्ञेया एत-
दुक्तरस्मिः एकहस्ते विद्यते द्वितीये वेत्रनामवेदत्रय-
कर्मकाण्डदेवकाण्डज्ञानकाण्डा तद्वारा जीवानां च-
तुर्वर्गफलदायिको भवति स एव परमेश्वरज्ञानमु-
द्रारूपः कथितः अर्थात् शुद्धसत्वज्ञानयुक्तः भगवज्ज-
न्मादिलीलां करोति, प्रमाणं बहूनि मे व्यतीतानीति
तर्हि किं शुद्धसत्वज्ञानयुक्तजीवतत्व एव ईश्वरः एत-
न्निर्गुणोपासकानां निष्टायुक्तवचनं तन्न सिध्यते किंतु
श्रीकृष्णाय परमोत्कृष्टाय कैवल्यस्वरूपविभागरहि-
ताय नमः तस्मा एव कैवल्यामृतरूपगीताशास्त्रदुहे
नमः ॥ ३ ॥

तदुक्तपरमोत्कृष्टस्वरूपमाह । सर्वेति—

॥ श्लोक ॥

सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥ ४ ॥

॥ टीका ॥

वेदेषु कर्मकाण्डदेवकाण्डज्ञानकाण्ड इति त्रय-

काण्डानि सन्ति तत्र त्रयकाण्डेषु सर्वोपनिषदानि सन्ति ता एव शब्दात्मिकत्वात् गोरूपाणि वर्णितानि तत्र यथार्थसाररूपार्थाणि दुग्धरूपं ज्ञेयं तदर्थजिज्ञासुपृच्छकरूपोऽर्जुनः वत्सरूपेण कथितः तदुत्तरवादी श्रीकृष्णएव दोग्धारूपो ज्ञेयः तद्यथा प्रथमे कर्मकाण्डविषये यत् अर्जुनस्य प्रश्नं संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि तत्र यद्भगवानाहयत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते इत्येवं कर्मकाण्डोपनिषदां दोहनं कृतं इति पञ्चमाध्याये कथितं तथा सप्तमाध्याये देवकाण्डविषये यो यो यां यां तनुं भक्त इत्यादिभिर्यद्भिन्नभिन्नरूपा देवा वर्णिताः तत्र सर्वान्तर्यामी नियंतृत्वधर्मेण भगवदेकएव सर्वत्र दर्शितः एतदेव देवप्रतिपादकोपनिषदां दोहनं कृतं तथा तृतीये ज्ञानकाण्डविषये यद्वेदान्तेन कथितं अज्ञानद्वारा जीवरूपं ज्ञानद्वारा ब्रह्मरूपं तथा कार्य्यउपाधिरयं जीवकारण उपाधिरीश्वर तथा च जीवब्रह्मैव नापरं इत्यादिभिर्वाक्यैरनीश्वरमतेन वहुविवादाः संभवन्ति अतएव तान्सर्वांस्त्यक्त्वा चतुर्दशाध्याये सर्वयोनिषु कौन्तेयेत्यादिभिरुत्पत्तिः कथिता अर्थात् समस्तयोनीनां कारणरूपा यदव्यक्तावस्था तत्र जीवभू-

तानां निजप्रकृतिं प्रेरणां द्वारा जगदुत्पत्तिर्वर्णिता स एव जीवातदऽव्यक्तप्रकृतिरुद्भवैः सत्वादिर्गुणैर्बन्धने भवति ततः परमेश्वरस्मरणाद्द्वारा बन्धनान्मुक्तो भवति इत्यष्टादशाध्यायेन कथितं एतदेव ज्ञानकाण्डस्य सर्वोपनिषदां दोहनरूपं विज्ञापनीयम् ॥ ४ ॥

तदेवाह—श्लोकः ।

वसुदेवसुतं देवं कंसचाणूरमर्दनं ।
देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम् ॥५॥

॥ टीका ॥

वसुदेवदेवकीसुतं परमानन्दस्वरूपं श्रीकृष्णचन्द्रमहं वन्दे परमानन्दनाम ब्रह्मानन्दध्यानानन्दयोगानन्द इत्यादि अध्यारोपप्रसङ्गानन्दं त्यक्त्वा अपवादरूपवास्तवपरमानन्दस्वरूपो वर्णितः प्रमाणं श्रीभागवते स वा इदं विश्वममोघलीलः सृजत्यवति न सज्जतेस्मिन् अर्थात् उक्त प्रसङ्गानन्दानि पृथक् पृथक् प्रियसङ्गात् भवन्ति श्रीपरमेश्वरः परमानन्दस्वरूपः निजप्रियद्वारा सृष्टिस्थितिलयं करोति अतएव तस्मिन् परमात्मनि पूर्ववत् अध्यारोपपृथगानन्दो न घटितः किन्तु अपवादरूपनिष्प्रपञ्चानन्दतत्वपरमानन्दस्वरूप परमेश्वरएव ज्ञेयः ॥ ५ ॥

अथोक्तपरमानन्दस्वरूपश्रीकृष्णस्य जगद्गुरुत्वं दर्शयति । भीष्मद्रोणेति—

॥ श्लोकः ॥

भीष्मद्रोणतटा जयद्रथजला गान्धारनीलोत्पला
शल्यग्राहवती कृपेण वहनी कर्णेन वेलाकुला ।
अश्वत्थामविकर्णघोरमकरा दुर्योधनावर्तिनी
सोत्तीर्णा खलु पाण्डवै रणनदी कैवर्त्तकः केशवः॥

॥ टीका ॥

अर्थात् कौरवपाण्डवयोरुभयोः पक्षयोर्युद्धेन प्रसन्नचित्तं तत्र गीताज्ञानद्वारा उभयोरहमभिमानं वर्जनत्वाज्जगद्गुरुरित्युक्तं तदभिमानं द्विविधं। प्रथमं गुणकर्मसङ्गात् स्वकृत्येभिमानं द्वितीयं भगवद्दासत्वरूपं अभिमानं तत्र स्वकृदभिमानिनां दलं नदीरूपं वर्णितं यथा नदी स्वयं प्रवाहरूपेण प्रवहती सती प्रसङ्गीजनानपि प्रवाहयति तथाभिमानयुक्ताः पुरुषा अपि संसर्गिकान् प्रवाहयन्ति तन्नदीतितीर्षुरूपोऽर्जुनदासत्वाभिमानयुक्त एव ज्ञेयः तदुत्तारणहेतुज्ञानरूपनौका तस्याः कैवर्तरूपश्रीकृष्णचन्द्र एव ज्ञेय इत्यर्थः ॥ ६ ॥

तद्गीताज्ञानश्रीवेदव्यासविस्तारित्वादुक्तं । पाराशर्येति—

॥ श्लोकः ॥

पाराशर्य्यवचः सरोजममलं गीतार्थगन्धोत्कटं
नानाख्यानककेसरं हरिकथासम्बोधनाबोधितं।
लोके सज्जनषट्पदैरहरहः पेपीयमानं मुदा
भूयाद्भारतपङ्कजं कलिमलप्रध्वंसि नः श्रेयसे॥७॥

॥ अथ टीका ॥

अमलं नाम पर्य्युषितभावरहितं नित्यनवीनमित्यर्थः तत्र गीताशास्त्रस्य गूढार्थ एव सुगन्धरूपं योगज्ञानादिनामैक्यरूपं कथनं तदेव केसरं सर्वं आहरति इति हरिः अर्थात् पृथक् तत्वानामाकर्षणं कृत्वा केवल्यरूपं भवति सम्बोधनाबोधितं बुबुधुजनानां बोधकं तत्र तत्कमलरसग्राहकाः सज्जना एव षट्पदाः भ्रमराः त एव पानं कृत्वा मुदिता भवन्ति, अतएव आह कलिमलप्रध्वंसि नः अस्माकं श्रेयसे भूयादित्यर्थः ॥ ७ ॥

यदाह श्रुतिः, चत्वारो वाक्ऽपरिमिता पदानि तच्चतुर्विधा वाणी नियन्तारूपं परमेश्वरं नमस्करोति ।

मूकमिति—श्लोकः ।

मूकं करोति वाचालं पंगुं लंघयते गिरिं ।
यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥ ८ ॥

॥ टीका ॥

परा पश्यन्ति मध्यमा वैषरी इति चतुर्विधा वाणी तत्र परानाम यज्जीवात्माद्वारा प्रथमं ॐकारशब्दोच्चारणं सा एव परा वाणी पश्यन्ति नाम यदन्तष्करणसङ्गात् अकारादि पञ्चाशतवर्णात्मिका वाणी निर्मिता सा पश्यन्तीत्युक्ता मध्यमानाम यत्प्राणादिद्वारा ऋषभगान्धारमध्यमपञ्चमादिसप्तस्वरानिर्मिता सा मध्यमा वैषरीनाम यत्तालुओष्ठजिह्वादिद्वारा देवमनुष्यपशुपक्ष्यादीनां विविधा छन्दांसिरूपा वाणी निर्मिता सा एव वैषरी कथिता तदुक्तवेदरूपवाणी त्रैकालिकअवस्थाप्रकाशकत्वात् त्रिकालज्ञानरूपा मायाशक्तिद्वारा परमेश्वरेण निर्मिता अतएव मायापतित्वात् माधव इत्युक्तः तत्र मूकरूपो जीवात्मा पंगुरूपं मनबुद्धिप्राणतात्वोष्ठजिह्वादीनि एते पंगवः उक्त वेदवाणीद्वारा गिरिरूपाऽव्यक्तावस्थां लंघयित्वा परम्पदं प्राप्नुवन्ति तस्मादाह पंगुं लंघयते गिरिमित्यादि इत्यर्थः ॥ ८ ॥

अथोक्तमाधवस्य माहात्म्यमाह । यं ब्रह्मेति—

॥ श्लोकः ॥

यं ब्रम्हावरुणेन्द्ररुद्रमरुतःस्तुन्वन्ति दिव्यैःस्तवैः
वेदैःसाङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः ।
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो
यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः॥

॥ टीका ॥

यं वेदा अपि नेतिनेति वदन्ति तमनन्तमाहिमानं माधवं नमस्करोमि । इति व्यासोक्तमङ्गलाचरणम् ।

---

अथ कथाप्रारम्भः ।

धृतराष्ट्र उवाच ।

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥१॥

॥ टीका ॥

क्षत्रियाणां युद्धमेव धर्म तस्मिन् युद्धरूपधर्मक्षेत्रे प्रवृत्ताः सन्तः कुरुक्षेत्रे पुण्यस्थाने किमकुर्वत इत्यर्थः॥

तदुत्तरमाह—संजय उवाच ।

दृष्ट्वेति—श्लोकाः ।

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्य्यमुपसंगम्य राजा वचनमब्रवीत् ॥२॥

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूं ।
व्यूढं द्रुपदपुत्रेण तव शिष्येण धीमता ॥३॥
अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥४॥
धृष्टकेतुश्चेकितानः काशिराजश्च वीर्य्यवान् ।
पुरुजित्कुन्तिभोजश्च शैव्यश्च नरपुङ्गवः ॥५॥
युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्वएव महारथाः ॥६॥
अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥७॥
भवान् भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥८॥
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥९॥
अपर्य्याप्तं तदस्माकं बलं भीष्माभिरक्षितं ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितं ॥१०॥
अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्वमेव हि ॥११॥

तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शंखं दध्मौ प्रतापवान् ॥१२॥
ततः शंखाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥१३॥
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शंखौ प्रदध्मतुः ॥१४॥
पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।
पौण्ड्रं दध्मौ महाशंखं भीमकर्मा वृकोदरः ॥१५॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥१६॥
काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥१७॥
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शंखान् दध्मुः पृथक्पृथक् ॥
स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥१९॥
अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ॥२०॥

हृषीकेशं तदा वाक्यमिदमाह महीपते ।
अर्जुन उवाच ।
सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥
यावदेतान्निरीक्षेहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥२२॥
योत्स्यमानानवेक्षेहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥२३॥
संजय उवाच ।
एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥२४॥
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षितां ।
उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति॥२५॥
तत्रापश्यत् स्थितान्पार्थः पितॄनथ पितामहान् ।
आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा॥
श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ।
तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ॥
कृपया परयाविष्टो विषीदन्निदमब्रवीत् ।
अर्जुन उवाच ।
दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥२८॥

सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥२९॥
गाण्डीवं स्रंसते हस्तात्त्वक् चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥३०॥
निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥३१॥
न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।
किन्नु राज्येन गोविन्द किं भोगैर्जीवितेन वा॥३२॥
येषामर्थे कांक्षितं नो राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च॥३३॥
आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाःश्वशुराःपौत्राःश्यालाःसम्बन्धिनस्तथा ॥
एतान्न हन्तुमिच्छामि घ्नतोपि मधुसूदन ।
अपि त्रैलोक्यराजस्य हेतोः किं नु महीकृते ॥३५॥
निहत्य धार्तराष्ट्रान्नः का प्रीतिःस्याज्जनार्दन।
पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ॥३६॥
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनःस्याम माधव ॥३७॥

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥३८॥
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषमपश्यद्भिर्जनार्दन ॥ ३९ ॥
कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥४०॥
अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ॥४१॥
सङ्करो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥४२॥
दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः ।
उत्पाद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥४४॥
अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥४५॥
यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥४६॥

सञ्जय उवाच ।

एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य ससरं चापं शोकसंविग्नमानसः ॥४७॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादेऽर्जुनविषादयोगो नाम प्रथमोध्यायः ॥ १ ॥

---

अथार्जुनस्य उक्तविषादशान्तिहेतुं पुनराह—

संजय उवाच ।

तं तथा कृपयाविष्टमस्रुपूर्णाकुलेक्षणम् ।
विषीदंतमिदं वाक्यमुवाच मधुसूदनः ॥१॥

श्रीभागवानुवाच ।

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥
क्लैव्यं मास्म गमःपार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्वल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ३ ॥

॥ टीका ॥

अनार्यजुष्टं आर्यपुरुषाणामसंमतं तथाऽस्वर्ग्यं स्वर्गदायिकमपि न अतएव अकीर्तिकरं अपयशदायिक-

मिदं कश्मलं मलीनबुद्धित्वं एतद्विषमसमये त्वां कुतः समुपस्थितं तदेवाह त्वयि नोपपद्यते ॥ २ ॥ क्लैव्यं नपुंसकत्वं मा भज क्षुद्रं तुच्छहृदययुक्तं दुर्बलत्वं त्यक्त्वा उत्तिष्ठ हे परंतप शत्रुतापक इत्यर्थः ॥ ३ ॥

भगवद्वचने यदुक्तं अनार्यजुष्टं तत्प्रत्याह—

अर्जुन उवाच ।

॥ श्लोकः ॥

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥४॥

॥ टीका ॥

केवलं क्लैव्यत्वाद्युद्धं न त्यजामि किन्तु भीष्मद्रोणाभ्यां पूजनीयाभ्यां सह इषुभिः कथं योत्स्यामि किमिति आर्यजुष्टमन्तं स्यात् न स्यादिति भावः ॥४॥

तर्हि किं कर्तव्यं तदाह—

गुरूनिति—श्लोकः ।

गुरूनहत्वा हि महानुभावान्
श्रेयो भोक्तुं भैक्ष्यमपीह लोके ।
हत्वार्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥५॥

॥ टीका ॥

गुरून् अहत्वा भिक्षान्नमपि भोक्तुं श्रेयः हत्वा तु भोगानपि रक्तमिश्रितान् भुञ्जीय इत्यर्थः ॥ ५ ॥

तत्र युद्धे जयपराजयोपि निश्चयो नास्ति तस्मादाह—

न चेति—श्लोकः ।

न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषाम-
स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥६॥

॥ टीका ॥

युद्धे वयं कौरवान् जयेम अथवा कौरवा अस्मान् जयेयुः इति न विद्मः अर्थात् अज्ञातकर्मे बुद्धिमान् प्रवृत्तिं न करोति इति तात्पर्य्यं अथ जयपक्षेपि दोषमाह अर्थात् गुरुबंध्वादिकान् हत्वा जीवनं न योग्यमित्यर्थः ॥ ६ ॥

इत्युक्तप्रकारेण लौकिकमतं वर्णयित्वा इदानीं शास्त्रोक्तधर्मं पृच्छति कार्पण्येति—

श्लोकः ।

कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेहं शाधि मां त्वां प्रपन्नम् ॥७॥

॥ टीका ॥

कार्पण्यदोषमिति लौकिकव्यवहारमतं धर्मं पृच्छामि इति शास्त्रोक्तं मतं तदुभयोर्मध्ये यत् श्रेयः स्यात् तन्निश्चितं ब्रूहि शिष्योहं अतएव प्रपन्नं मां शिक्षां कुर्वित्यर्थः यथा पूर्वमङ्गलाचरणे जीवस्य सहायकारी परमेश्वर इति वर्णितः तदत्रापि गुरुशिष्यरूपेणोक्तं न केवलं साधारणसारथिरूपेण विज्ञापनीयं इति भावः ॥ ७ ॥

इदानीं इहामुत्र विषये पृच्छति—

नहीति—श्लोकः।

न हि प्रपश्यामि ममापनुद्या-
द्यच्छोकमुच्छोषणमिन्द्रियाणाम्।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥

॥ टीका ॥

न हीति यत् शोकेन इन्द्रियाणां शोषणं भवति तदा यत् निवारणं न पश्यामि भूमौ राज्यं प्राप्य तथा स्वर्गे सुराणां राज्यं प्राप्य न सुखं पश्यामि अर्थात् ज्ञातिविरोधत्वादुभयत्र सुखं न भवति ॥८॥

इत्यर्जुनस्य वाक्यं सञ्जयो धृतराष्ट्रं प्रति आह—

सञ्जय उवाच ।

॥ श्लोकः ॥

एवमुक्त्वा हृषीकेशं गुडाकेशः परंतपः ।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥९॥
तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥१०॥

॥ टीका ॥

प्रहसन् तात्पर्य्यसङ्गात् निन्दारूपवचनं ॥१०॥

तत्र यदर्जुन आह—पतन्ति पितरो ह्येषामिति जातिधर्मः तथा गुरूनहत्वा हि महानुभावान् इति आश्रमधर्मः उभौ साधारणधर्मौ, तदुभौ त्यक्त्वा परमोत्कृष्टभागवद्धर्मं धारयेत् तद्यथा श्रीभगवानाह—सर्वधर्मान्परित्यज्य मामेकं शरणं व्रजेति तथा भागवते वृत्रासुर वचनं अहं हरे तव पादैक मूलदासानुदासो भवितास्मि भूयः मनस्मरतासु पतिर्गुणास्ते गृह्णीत वाक्कर्म करोतु कायः ॥ १ ॥ इत्युक्तधर्मशिक्षार्थं ।

श्रीभगवानुवाच ।

॥ श्लोकः ॥

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥११॥

नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतःपरम् ॥१२॥

॥ टीका ॥

प्रज्ञावादामिव वदति अज्ञानीव शोचयति अहमेतेषां पतिः ममाधीना एते जीवधनप्राणाः, प्राणत्वान्न शोचन्ति ॥ ११

अहं परमेश्वरः त्वं अनुभवस्वरूपः शुद्धजीवात्मा मदीय परा प्रकृतिरूपः तथा इमे जनाधिपा मनबुद्ध्यादिऽपराप्रकृतिरूपाः अर्थात् एतदुभौ मदीयप्रकृतिः सर्वदा नित्याज्ञेया जातु इति जन्म तथा नासं न प्राप्नोति अतएव आह वयं सर्वे पूर्वे किं न अभूवम् तथा आगामि कालेपि किं न भविष्याम अपि तु भविष्याम एव अत आह जातु नाशं जन्म मरणं न संभवति ॥ १२ ॥

तद्दृष्टान्तेन दर्शयति—

॥ श्लोकः ॥

देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥१३॥

॥ टीका ॥

अत्र मनबुद्ध्यादि कूटरूप एव देही कथ्यते भोगी-

रूपत्वात् न तत्रस्थो जीव अभोक्ता रूपेण प्रकाश-कत्वात् यथा कौमाराद्यवस्थां भुक्त्वा स्थूलदेहो विनश्यति तथा सूक्ष्मदेहो न विनश्यति पुनर्भवरूपत्वात् अतएवाह न मुह्यति पूर्वाभ्यासं न विस्मरति यथाह षष्ठे पूर्वाभ्यासेनेति ॥ १३ ॥

तस्मादाह—मात्रेति—श्लोकः ।

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनो नित्यास्तांस्तितिक्षस्व भारत ॥

॥ टीका ॥

स्वस्व ऋतुकालानुसारेण यः सुखदः स एव दुःखदो भवति, यः दुःखदः स सुखदो भवति । दुःखदायिकाः शीतोष्णादयो मात्रास्पर्शा हि चर्मदेहे एव आस्ते आगमापायिनो नाम गतागतरूपत्वादऽनित्या अतएव तान् तितिक्षस्व सहनं कुरु ॥ १४ ॥

तदुक्तसहनशीलस्य माहात्म्यमाह—

यमिति—श्लोकः ।

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥१५॥

एते स्पर्शरूपाः शीतोष्णादयः यं न व्यथयन्ति स एव पुरुषः सहनशीलः, मनबुद्धिज्ञानेन्द्रियादिकूट-

रूपयुक्तः तत्र त्वन्तु क्षेत्रज्ञरूपेण पुरुषर्षभः अतएव त्वां स्पर्शादिसुखदुःखं नास्ति इत्येवं सुखं दुःखं यः समं जानाति सोऽमृतत्वाय मोक्षाय कल्पते अर्थात् पूर्वोक्तप्रकारेण समज्ञाता जीवात्मा मनबुद्ध्यादिसङ्गं त्यक्त्वा कैवल्यस्वरूपे परमेश्वरे वर्तते उक्तप्रकार अनन्यभक्तिरूपा एव मुक्तिः यदन्यप्रकारं मुक्तिमाह तदेव पुष्पितं वचः न यथार्थमित्यर्थः ॥ १५ ॥

तदेव दर्शयति नासतो इति—

श्लोकः ।

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥१६॥

॥ टीका ॥

तत्र स्थूलदेहः सप्तधातुरूपत्वात् असद्रूपो घटितः त्वक्चर्मरुधिरमांसास्थिमज्जाशुक्रा एत एव सप्तावरणस्य विकाररूपाः सप्तधातवः तत्र प्रथमावरणमहत्तत्वं तस्य शुक्रधातुः स एव देहस्य साधारणकारणं यस्मादवस्थानुसारेण उत्पत्तिविनाशं प्राप्नोति द्वितीयावरणमहङ्कारं तस्य मज्जारूपधातुः स एव शुक्रस्य कार्यरूपं यथा महदस्य कार्यमहङ्कारं तृतीयः कठिनरूपः पृथिव्याद्यास्थिरूपो धातुर्वर्णितः रसरूपजलात् मांसधातुः

पञ्चमोऽग्निरूपावरणात् रुधिररूपो धातुःस्यात् स एव पित्तरूपेण हृदयदाहकत्वात् तथा षष्ठावरणवायुरूपात् रोमादिसङ्गात् त्वक् धातुः शीतोष्णादिस्पर्शकत्वात् सप्तमावरणरूपाकाशात् छिद्रसङ्गाच्चर्मधातुर्वर्णितः इत्युक्तसप्तधातुमयस्थूलदेहोऽसद्रूपेण वर्तते तएव सूक्ष्मदेहाभावे अस्थ्यादिसप्तधातवः साक्षाऽदसद्रूपेण दृश्यन्ते ॥ १६ ॥

इदानीं सद्रूपं वर्णयति । अविनाशीति—

॥ श्लोकः ॥

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति॥१७॥

॥ टीका ॥

भूम्यादिपञ्चतत्वानि भूर्भुवः स्वः मह जन तपः सत्यं इत्यादि सप्तलोके रूपेषु आततानि तथा मनबुद्धीन्द्रियादिषोडशकलात्मकं सूक्ष्मस्वरूपं ब्रह्मादि समस्तदेहेषु आततं तदेव सूक्ष्मरूपं व्यक्ताव्यक्तं भवति तदेवाव्यक्तं देवतिर्यङ्मनुष्यादीनां योनिरूपेण सर्वतः आततं तत्प्रामाणं सर्वयोनिषु कौन्तेयेति तद्व्यक्ताव्यक्तरूपस्य कर्ता कालः स एव परमाणवादि वर्षयुगकल्पादिरूपेण सर्वत्र आततं, तत्कालमपि शास्त्रेण

वर्णितं तच्छास्त्रमपि परापश्यन्ति मध्यमावैषरीति चतुर्विधा वाणीरूपेण सर्वत्र आततं, तच्छास्त्रवाचको जीवात्मा तथा शास्त्रस्य कर्ता त्रिकालज्ज्ञानयुक्त-कैवल्यस्वरूपः श्रीपरमेश्वर एव जीवात्मासहितः सर्वत्र आततं, तद्यथाह सर्वतः पाणिपादं तदिति तथा नमोस्त्वनन्ताय सहस्रमूर्तये इति अतएव उक्त आततरूपमिदं विश्वं सगुणस्वरूपस्य श्रीपरमेश्वरस्य सत्यरूपं विचारणीयं तदेव जीवात्मासहितं चिद्रूपं चिन्तनीयं सद्रूपगायत्रिमन्त्रं विचारणीयं तद्यथाह भागवते यथेन्द्रियपृथग्द्वारैरर्थवहुगुणाश्रय एको तथा शास्त्रेषु निर्गुणसगुणसरूपं भगवन्तं वदन्ति नानेयते तद्वद्भगवान् शास्त्रवर्त्मभिः ॥१॥ यथा रूपरसादि युक्त एकवस्तु पृथगिन्द्रियद्वारा पृथग्बोधो भवत् अतएव ब्राह्मणाः द्वात्रिंशद्वर्णयुक्तचतुष्पदीगायत्रीद्वारा परमेश्वरस्याराधनां कुर्वन्ति अतएवाह नासतो विद्यतेति तदुक्तप्रकारेण उभयोः सत् असतो भेदं तत्वदर्शिनः ज्ञास्यन्ति अर्थात् तत्वविचारकाः उक्तप्रकारेण सत् असत् तत्वं विचारयन्ति ॥ १७ ॥

अनित्यं पुनर्दर्शयति । अन्तवन्त इति—

॥ श्लोकः ॥

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत॥१८॥

॥ टीका ॥

इमे देहा उक्तसप्तधातुनिर्मिता देहा अनित्याः सूक्ष्मो देहो नित्यः अप्रमेयोऽपरिमित अशरीरिणः इत्यत्र यद्बहुवचनं तत्र यत्पुराणेषु सप्तावरणयुक्तानि अनेककोटिब्रह्माण्डानि भगवदुदरे वर्णितानि तत्र यदऽव्यक्तावस्था सा एव उदररूपं तदवस्थापि अनेकयोनीनां कारणरूपं वर्णितं यद्योनीनि एव महदादि पृथिवीपर्य्यन्तसप्तावरणयुक्तानि तदण्डानि यत्कालानुसारेण भ्रमन्ति स कालोपि भगवतो विभूतिरूपः यथाह "कालः कलयतामहं" अतएव आह अनाशिनोऽप्रमेयस्याशरीरिणः एव समस्तान् देहदेहीन् मम देहास्थितान् अविनाशिनः ज्ञात्वा युद्धयस्वेति भावः ॥ १८ ॥

तत्राह य इति—श्लोकः ।

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते॥१९॥

॥ टीका ॥

सूक्ष्मदेहे कर्तृत्वं भोक्तृत्वं नास्ति यत्कर्मफलभो-

क्तृत्वरूपं मन्यते स एव दशापिण्डदानसङ्गात् भव-
तीत्यर्थः ॥ १६ ॥

तदेवाह न जायतेति—

॥ श्लोकः ॥

न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ २० ॥

॥ टीका ॥

अर्थात् यत् पूर्वं भगवानाह न चैव न भविष्यामः सर्वे वयमतःपरम् इत्यादि वाक्यद्वारा सर्वं एव सर्वदा नित्यस्वरूपेणास्ते अर्थात् स्थूलदेहो नश्यति सूक्ष्मदेहो न विनश्यति प्रकृतिरूपत्वादिति भावः ॥ २० ॥

अत्र वेदादि प्रमाणमाह—

वेदा इति—श्लोकः ।

वेदा विनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम्॥२१॥

अथ टीका ।

अर्थात् वेदापि फलभोक्तृरूपेण सूक्ष्मशरीरमवि-

नाशिनं वदन्ति अर्थात् देवतिर्यङ्मनुष्यादियोनिरूपेण नित्यमेवास्ते ॥ २१ ॥

तदेव दर्शयति । वासांसीति—

॥ श्लोकः ॥

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥ २२ ॥

॥ टीका ॥

अर्थात् महदादिसप्तावरणविकाररूपधातुमयस्थूलदेहं वासांसीव त्यजति पुनरेव तन्महदादिविकाराद्भवसप्तधातुमयविचित्रदेवतिर्यङ्मनुष्यादिरूपं भवति ॥ २२ ॥

इदानीं धातुकारणं महदादिरूपं विशेषेण दर्शयति । नैनमिति—श्लोकः ।

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३ ॥

॥ टीका ॥

अर्थात् शस्त्राणि पृथिवीकार्यरूपाणि तानि एव पृ-

थिवीं न छेदयन्ति, तथाग्निरग्निं न दहति तथापोपि जलं न प्लावयन्तीत्यादि ॥ २३ ॥

तदेव पुनरेव कथ्यते । अच्छेद्य इति—

श्लोकः ।

अच्छेद्योयमदाह्योयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतःस्थाणुरचलोयं सनातनः ॥२४॥
अव्यक्तोऽयमचिन्त्योमंविकार्य्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितमर्हसि ॥२५॥

॥ टीका ॥

अर्थात् स्थूलधातुरूपदेहपरित्यागे न सूक्ष्मदेहः प्राणानिसहित विदित आस्ते तद्यथाह—श्लोकः । आकाशस्थो निरालम्बो वायुभूतो निराश्रयः, इति उक्त प्रमाण एव स्पष्टं करोति । अथेति—

॥ श्लोकः ॥

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥२६॥

॥ टीका ॥

अर्थात् यद्यपि त्वं सर्वदा जन्ममृत्युरूपदेहीमन्यसे तदापि शोचं न कर्तव्यं, तदेवाह । जातस्येति—

॥ श्लोकः ॥

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥२७॥

॥ टीका ॥

सुगमार्थः । तज्जन्मादि लक्षणमाह । अव्यक्तेति—

॥ श्लोकः ॥

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥२८॥

॥ टीका ॥

अर्थात् अन्नाद्रेतः रेतात्पुरुषः इति श्रुतिः तत्र रेतस्थानात् अव्यक्तरूपपुरुषः सावयवरूपेण व्यक्तो भवति स एव पुरुषः कालानुसारेण मध्यावस्थापर्य्यन्तम् वृद्धोभवति पुनश्च वृद्धाद्यवस्थाप्राप्तिं कृत्वा भूम्यादिस्थानेऽव्यक्तरुपो भवति, उक्तप्रकारेण निजकृतकर्मफलानि भुज्यन्ते ॥ २८ ॥

तदेव साक्षात्काररूपेण दर्शयति । आश्चर्येति—

॥ श्लोकः ॥

आश्चर्य्यवत्पश्यति कश्चिदेन-
माश्चर्य्यवद्वदति तथैव चान्यः ।

आश्चर्य्यवच्चैनमन्यः शृणोति
श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ २९ ॥

॥ टीका ॥

आश्चर्य्यवत्पश्यति नामोत्तमजातावुत्पन्ने नीचव्यवहारः तथा नीचजातावुत्पन्नावुत्तमव्यवहार एतदेव पूर्वजन्मक्रियावर्त्तमाने आश्चर्य्यवत्पश्यति तथा कश्चिदाह पूर्वजन्मकृतं निश्चयेन भोक्तव्यं तथा च कर्मविपाकादिशास्त्रद्वारा पूर्वजन्मकृतं शृणोति श्रुत्वा पश्यति वदति शृण्वति सति तद्व्यक्ताव्यक्तगतिं न विन्दति तद्यथाह पञ्चदशाध्याये मत्तः स्मृतिर्ज्ञानमपोहनं च अर्थादन्तर्यामी परमेश्वरद्वारा पूर्वजन्मकृतकर्मणां स्मृतिं लभते तथा पूर्वजन्मविस्मरणं भवति ॥ २९ ॥

अतएवाह—देहीति—

॥ श्लोकः ॥

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥
स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोन्यत् क्षत्रियस्य न विद्यते ॥

॥ टीका ॥

नन्वेतद्युद्धं भारतानां नामानीश्वरवाद्यासुरिवंश-राजन्यानां विनाशद्वारा पृथिवीभारं निवारणाय केवलं राज्यादिलाभार्थाय न तद्यथाह द्वौ भूतं सर्गलोकेस्मिन्दैव आसुर एव च अर्थादनीश्वरवादी आसुर ईश्वरप्रतिपादको देवरूपः तस्मादिन्द्रांशमर्जुनं प्रति भगवानाह स्वधर्ममपि चावेद्धयेति किन्तु क्षात्रियोपि भूमिपालको जाननीयः अतएवानीश्वरवाद्यसुराणां वधद्वारा क्षितिपालकः क्षात्रियो भवति ॥३१॥

तत्रैवाह—यदृच्छयेति—

॥ श्लोकः ॥

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतं ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम्॥३२॥

॥ टीका ॥

यदृच्छया नाम येन केन प्रकारेण युद्धे प्रवृत्ते सति क्षत्रियाणां स्वर्गद्वारोपावृतो भवति नाम निरावरणो भवति किन्तु ईदृशम् नाम मम दृष्टिगोचरं तथा मम दर्शनसहितं यद्युद्ध तदव वैकुण्ठलोकं वामदीपस्वरूपं प्राप्यते अतएवाह सुखिनः क्षत्रिया ईदृशम् युद्धं लभन्ते ॥ ३२ ॥

पुनर्भगवानाह—अथेति—

॥ श्लोकः ॥

अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥

। टीका ॥

इमं बुद्धियुक्तं संग्रामं न करिष्यसि तर्हि भागवतधर्मयुक्तकीर्तिं हित्वा पापरूपासुरिमार्गं प्राप्स्यसि ॥

तत्फलमहाकीर्तिमिति—

॥ श्लोकः ॥

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥३४॥

॥ टीका ॥

उक्तधर्मरूपयुद्धं त्यक्त्वा न युध्यसे तदा भूतानि तवाकीर्तिं कथयिष्यन्ति उत्तमयशोयुक्तपुरुषस्याकीर्तिर्मरणादतिगरीयसी भवति ॥ ३४ ॥

तदकीर्तिमाह । भयादिति—

॥ श्लोकः ॥

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥३५॥

॥ टीका ॥

त्वं तु वदसि यत् ज्ञातिवधेन वर्णसङ्करोत्पत्तिर्भवति तर्हि पितरो नरकगामिनो भविष्यन्ति तथा हि गुरून् हत्वा पापभयाद्योद्धुं नेच्छसि किन्तु दुर्योधनस्य पक्षिनो महारथा भयाद्रणादुपरतमिति मंस्यन्ते उक्तप्रकारेण दैव्यासुरीबुद्धेर्लक्षणम् दर्शयति तत्फलमाह ये पुरुषास्तवमहत्त्वं भावयन्ति ते तवलघुत्वं मंस्यन्ते ॥३५॥

तर्हि किं तदेवाह—अवाच्येति—

॥ श्लोकः ॥

अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः।
निन्दन्तस्तवसामर्थ्यं ततो दुःखतरन्नु किम्॥३६॥

॥ टीका ॥

तव सामर्थ्यमहमेव यत्तवसारथिरूपेण सहायकारी बभूव अतएवैतदपीश्वरनिन्दारूपासुरी बुद्धिर्भवति उक्तप्रकारेण दैव्यासुरीबुद्धेर्निर्णयं कृत्वा—इदानीं युद्धफलमाह—हत इति ॥ ३६ ॥

॥ श्लोकः ॥

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीं।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः॥३७॥

॥ टीका ॥

स्वर्गप्राप्तेरयं भावः किं स्वर्गे इन्द्रादिरूपेण मदीय-सावयवरूपाङ्गानि भवन्ति महीमिमां भारतभूमिं सैव भगवद्भक्तेरुत्पत्तिस्थानं तदाह भागवते अहो-मीषां किमकारि शोभनं प्रसन्न येषांसीदुत स्वयं हरिः। यैर्जन्म लब्धं नृषु भारताजिरे मुकुन्दसेवोपयिकं स्पृहाहिनः ॥ १ ॥

उक्तप्रकारेण धर्मोपदेशद्वारा युद्धे प्रवृत्तिं कृत्वा इदानीं ज्ञानोपदेशद्वारा युद्धे जन्मायति । सुखेति—

॥ श्लोकः ॥

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व न त्वं पापमवाप्स्यसि॥३८॥

॥ टीका ॥

सुखदुःखे समे कृत्वा अर्थात् जन्मविषये सुखं मृत्युविषये दुःखं तौ उभो समानरूपौ कृत्वा अर्थात् जीवात्मनि तौ उभौ मिथ्यारूपौ घटतः तत्र यदाह न जायते म्रियते वा कदाचित् इति तथा लाभालाभौ लाभो देवादिशरीरप्राप्तिः अलाभः पशुपक्ष्यादिशरीरप्राप्तिः तत्र जीवात्मा सर्वत्रैव समानरूपः, तथा जयपराजयउभयपक्षेपि जीवात्मा समानरूपः अत-

एव समानरूपस्थाने जीवात्मनः पापपुरायौ न भवतः इत्यर्थः तस्मादेव उक्तज्ञानयुक्तो युद्धं कुरु यस्मात् जीवात्मनः जन्ममृत्युरभावात् पापं नास्तीत्यर्थः ॥३८॥

उक्तप्रकारेण सांख्यशास्त्रद्वारा जीवात्मनः शुद्धतत्वं विचारं कृत्वा इदानीं योगशास्त्रद्वारा बुद्धिशुद्धविचारत्वं वर्णयति एषा तेऽभिहिता सांख्येति—

॥ श्लोकः ॥

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि॥३९॥

॥ टीका ॥

अर्थात् यत् सांख्यशास्त्रे तत्वविचारसङ्गात् संन्यासरूपेण मुक्तिफलं सिद्धं कुर्वन्ति तदेव बुद्धिविचारं विना न संभवति तस्मादाह एषा बुद्धिः त्वां प्रति सांख्यविषयेन कथिता अधुना इमां बुद्धिं योगे नाम योगविषये शृणु यया बुद्ध्या युक्तः सन् कर्मबन्धनात् मुक्तो भवति अर्थात् यत्फलप्राप्तिहेतुराशां कुर्वन्ति तदेव बन्धनं तत्प्रमाणमाह श्रुतिः मुक्त्यापेक्षया सङ्कल्पबन्धः तद्बन्धनं बुद्धियुक्तपुरुषाणां न भवति इत्यर्थः ॥ ३६ ॥

तद्बुद्धेः साधनमाह—नेहाभीति—

॥ श्लोकः ॥

नेहाभिक्रमनाशोस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥४०॥

॥ टीका ॥

अर्थात् अत्र स्थाने इहा पद इहा नाम श्रवणमननादिरूपाचेष्टा नान्यकर्मचेष्टा तत्र यदाह पाराशरश्रुतिः आत्मावारे श्रोतव्यः मन्तव्यः निधिध्यासितव्यः साक्षात्कर्त्तव्यः अतएव उक्त इहाफलसाधनरूप अन्य यज्ञादिवत् न भवति तस्मादाह प्रत्यवाय इति अर्थात् स्वर्गादिफलस्य क्रमेण फलभोगद्वारेण नाशं भवति तत्वविचाररूप इहायाः क्रमनाशो नास्ति तथा स्वर्गादिफलस्य प्रत्यवायोस्ति तत्वविचारस्य प्रत्यवायोपि नास्ति अर्थात् साक्षात् रूपं दर्शनत्वात् अतएवाह स्वल्पं धर्मं अन्य यज्ञादिवन्न विस्तृतं केवलं तत्वविचारमात्रं इहामहतो भयात् जन्ममृत्युरूपं भयात् त्रायते इत्यर्थः ॥ ४० ॥

तदेव उक्तबुद्धेर्निश्चयत्वं दर्शयति । व्यवसायेति—

॥ श्लोकः ॥

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥४१॥

॥ टीका ॥

व्यवसायात्मिका बुद्धिरेकेह नाम आत्मातत्त्वे निष्ठा-रूपा बुद्धिरेका एव न नानात्वरूपं अर्थात् निश्चया-त्मिका बुद्धिर्जन्मान्तरेपि न विनश्यतीति भावः । तद्यथाह षष्ठाध्याये—पूर्वाभ्यासेन तेनैव ह्रियते ह्य-वशोपि सः । जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्त्तते ॥१॥

अथाव्यवसायिनां आत्मनिष्ठारहितपुरुषाणां बहु-शाखा नाम बहुकल्पनायुक्ता बुद्धयो भवन्तीत्यर्थः ॥४१॥

तदुक्त अव्यवसायिनां कारणमाह । यामिमामिति—

॥ श्लोकः ॥

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥४२॥

॥ टीका ॥

पुष्पितां वाचं नाम फलसिध्यर्थवाचं सा एव वेदवादे रतिं जन्मायति न फलसिध्यर्थे कथितं अर्थात् वेदवादे रत्युत्पादनहेतु यद्वेदेन फलस्तुतिरूपवचनं कथितं तदेव वचनं अविपश्चितः नाम अविवेकिनो जनाः सत्यमेव मन्यन्ते अर्थात् नान्यदस्ति इति व-दन्ति किन्तु विवेकवन्तः पुरुषाः तद्वत्सत्यं न मन्यन्ते इति भावः ॥ ४२ ॥

इत्युक्तप्रकारेण जीवात्मानं प्रति तथा बुद्धिं प्रति हितमुपदेशं कृत्वा इदानीं मनः प्रति उपदेशं करोति कामात्मानः इति—

॥ श्लोकः ॥

कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥४३॥

॥ टीका ॥

कामात्मन इति स्वर्गपरा कामात्मानः क्रियाविशेषबहुलां जन्मकर्मफलप्रदां वाणीं वदन्ति क्रियाविशेषवहुलां नाम क्रियाविशेषरूपेण पृथक् पृथक् कर्मद्वारेण पृथक् पृथक् फलभोगार्थे पृथक् पृथक् जन्मानि धारयन्तीति भावः इत्येवं वहुविधां क्रियाविशेषवहुलां वाणीं भोगैश्वर्य्यगतिं प्रति वदन्तीत्यर्थः ॥४३॥

तदेव दर्शयति । भोगैश्वर्य्येति—

॥ श्लोकः ॥

भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते॥४४॥

॥ टीका ॥

भोगैश्वर्यप्रसक्तानां तया पूर्वोक्तवाणया अपहृतचेतसां पुरुषाणां आत्मव्यवसाया बुद्धिः समाधौ न

विधीयते किन्तु तर्हि भोगैश्वर्यगतिं प्रति प्रवृत्ति-र्भवति तर्हि व्यवसायात्मिका बुद्धिः समाधौ न विधीयते अर्थात् आत्मनिष्ठाबुद्धिः कामात्मिकानां न भवाति अतएव समाधियोग्या न भवन्ति नानायोनिषु भ्रमन्तीत्यर्थः ॥ ४४ ॥

उक्तप्रकारेण ज्ञानसाधनपक्षे समाधियोगे उभयोर्बुद्धिजीवयोर्मन एव बाधको भवाति तद्दोषनिवारण उपायमाह । त्रैगुण्यविषया वेदेति—

॥ श्लोकः ॥

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्वस्थो निर्योगक्षेम आत्मवान् ॥

॥ टीका ॥

इह गीताशास्त्रे सप्तमाध्याये श्रीपरमात्मनः परमेश्वरस्य जीवात्मापरारूपा प्रकृतिर्वर्णिता तथा भूम्यादि अष्टौ अपरा प्रकृतिरूपेण वर्णिता तत्र भूम्यादि सप्तावरणसङ्गादुद्भवान् सप्तधातून् सूक्ष्मशरीरो वासांसिरूपजीर्णवत्त्यक्त्वा नूतनवत् देहोत्पत्तिं करोति तदत्र युद्धस्थाने श्रीभगवत्सन्मुखे शरीरनिपातेन तद्रूपवातत्पार्षदरूपाः संभवन्ति तत्र भगवानाह तद्व्यक्ताव्यक्तस्य रूपार्थे तत्र का परिदेवना इति

किन्तु सप्तधातुमयरूपं व्यक्तं पार्षदरूपं अव्यक्तं तदत्र का परिदेवना अर्थात् उभयपक्षे भगवत्प्रकृतिं विना अन्यथा न भवति इति भावः तत्र जीवात्मनः प्रति सुखदुःखे समे कृत्वेति अकर्ता अभोक्ता रूपेण जीवरूपा परा प्रकृत्या शुद्धभावं दर्शयित्वा ततः अपरा प्रकृतिरूपबुद्धिं प्रति श्रवणमननादिरूपेण तद्धि नं दर्शितं इत्यादि प्रकारेण निजप्रकृतीनां स्वयमेव हितकारीति विचारणीयम् इत्येवमुक्तप्रकारेण अहङ्कारादिसङ्गात् बुद्धिविचारद्वारा जीवात्मनः शुद्धभावत्वं वर्णितं इदानीं मनसः सङ्गात् जीवात्मनः त्रिगुणोद्भवदोषराहित्यं शुद्धभावत्वं वर्णयति। त्रैगुण्येति अर्थात् सत्वगुणसंयुक्तमनसः सङ्गात् मुक्तिमिच्छन्ति एतदेव मोक्षरूपं तथा रजोगुणसंयुक्तमनसः सङ्गात् अणिमादिसिद्धिमिच्छन्ति एतदेव अर्थरूपं तथा तमोगुणसंयुक्तमनसः सङ्गात् दिव्यभोगादिऋद्धिमिच्छन्ति एतदेव धर्मकामरूपं अर्थात् स्वर्गादिविषयकामना स्व-स्वरूपविस्मृतिकारिकत्वात् तमोगुणस्य लक्षणं कथितं इत्येवं मनसः सङ्गात् त्रैगुण्यमयधर्मअर्थकाममोक्षादिविषये वेदादिद्वारा तत्तत् सिद्धिं कुर्वन् सन् मनसः सङ्गात् जीवात्मा अशेषयोनिषु भ्रमति अत-

एवाह निस्त्रैगुण्यो भव अर्थात् मोक्षादिषु वासनां मा कुरु किन्तु जीवात्मा निर्गुणरूपेण स्वयंमुक्तत्वात् उक्तमुक्त्यादिरूपसङ्कल्पं न कर्तव्यम् तद्यथाह श्रुतिः मोक्षापेक्षया सङ्कल्पः बन्धः तत्कारणमाह निर्द्वंद्वेति अर्थात् ब्रह्मादिपिपीलिकापर्य्यन्तसमानरूपेण वर्त्तते किन्तु यत् मनसादिषोडशकलाऽऽवर्णसङ्गात् भिन्नभिन्नं दृश्यते तदेव आकाशवच्छिन्नमिथ्याघटितः नित्यसत्वस्थः सन् निर्द्वंद्वः अहं त्वं तवतम इत्यादि भेदरूपद्वन्द्वरहितः सन् अप्राप्य योगार्थं चेष्टा न कर्तव्या इति भावः नित्यसत्वस्थ नाम सत्वरूप निजस्वरूपे स्थितो भव निर्योगक्षेमः अप्राप्ययोगविषये क्षमां कुरु अर्थात् निष्कामो भव अप्राप्य योगार्थे कामानां मा कुरु इति भावः अतएव आत्मवान् नाम पुरुषार्थवान् भवेत्यर्थः अथोक्तनित्यसत्वस्थ इति वाक्यन जीवात्मानं प्रति उपदेशः निर्योगक्षेम इति वाक्येन मनःप्रति उपदेशः इत्येवं विचारणीयम् ॥४५॥

इदानीं उक्तब्रह्मज्ञानस्य माहात्म्य रूपसमस्तवेदानां पृथक् २ वचनं समवायेन वर्णयति । यावानर्थेति—

॥ श्लोकः ॥

यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥४६॥

॥ टीका ॥

यत्पूर्वोक्तं धर्मार्थादिचतुर्विधफलेषु वासना न कर्त्तव्या तदेव उदपानदृष्टान्तेनाह तत्र धर्मफलं जन्मानुसारस्वस्वजातिविहितमित्यर्थः अर्थफलभोगरूप पुरुषार्थद्वारा कामनाऽणिमादिसिद्धिफलसैव अष्टाङ्ग आसनादि योगद्वारामुक्तिफलं तत्वविचारद्वारा इत्यादि पृथक् साधना पृथक् उदपानवत् तत्र अकर्त्ताऽभोक्तारुप ब्रह्मास्मि इति बोधोभवेत्तर्हि धर्मादि उक्तचतुर्थफलसिद्धिं प्राप्नोति इति प्लुतोदकवत् दृष्टान्तः, संप्लुतोदके भवति तद्वतयावान् मुमुक्षादि फलवेदेन वर्णितं तत्सर्वं ब्रह्मास्मि इति ज्ञानेन सिद्धिं भवाति अर्थात् स एव जीवात्मनः स्वजातिवत् स्वधर्मं तथा सर्वकामार्थादिसिद्धिं प्राप्नोति इत्यर्थः ॥ ४६ ॥

उक्तप्रकारेण स्वार्थधर्मनिरूपणं कृत्वा इदानीं भगवद्धर्म निरूप्यते । कर्मणीति—

॥ श्लोकः ॥

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूमा ते सङ्गोऽस्त्वकर्मणि ॥४७॥

॥ टीका ॥

अर्थात् सर्वकामनां त्यक्त्वा भगवदाराधना तत्कथा

श्रवणकीर्तनादिरूपकर्मादीनि कर्तव्यानि, तदेव फलादिवासनारहितं तथा च तत्कर्म अहं कर्तृत्वेति सङ्गाभिमानं त्यक्त्वा तदपि किञ्चित्फलार्थेन कर्तव्यं इति भावार्थे तद्यथा श्रीमद्भागवतेनाह—आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थं भूतगुणो हरिः—इत्यर्थः ॥ ४७ ॥

तद्भक्तिसाधनप्रकारमाह—

॥ श्लोकः ॥

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते।४८।

॥ टीका ॥

यद्यपि जीवात्मा बुद्धियोगात् निजस्वतत्त्वविस्मरणं भवेत् तद्यपि अवरं नाम मन्दकर्मदूरकृतनिमेतेन बुद्धिं अङ्गीकरोति तथा कृपणाः पुरुषाः फलहेतवो बुद्धिकिङ्कराः भवन्ति—

योगनाम क्रियाशास्त्रानुसार श्रीकृष्णप्रीत्यर्थे इति सङ्कल्पद्वारा तत्कर्मणः अन्यत्फलं त्यक्त्वा कर्त्तव्यं तत्कर्मणः श्रीकृष्णस्य दर्शनमदर्शनं इति सिद्ध्यसिद्धिरूपं त्यक्त्वा कर्त्तव्यं अर्थात् शास्त्रद्वारा श्रीपरमेश्वरे आस्तिकबुद्धिः कर्त्तव्या इत्यर्थः ॥ ४८ ॥

तदेवाह—दूरेणेति—

॥ श्लोकः ॥

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥४९॥

॥ टीका ॥

कृष्णाराधनव्यतिरिक्तकर्मदूरादेव त्यक्त्वा कस्मात् बुद्धियोगात् तद्बुद्धिद्वारा कृष्णशरणं अनुदिनं इच्छन् अन्यहेतवः कृपणाभवन्ति वांछां न कुर्वन्ति इत्यर्थः ॥

तत्प्रकारमाह—

॥ श्लोकः ॥

बुद्धियुक्तो जहातीह उभे सुकृदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥

॥ टीका ॥

बुद्धिमन्तः पुरुषाः भगवद्भक्तिं विना अन्यप्रकार सुकृदुष्कृते त्यजन्ति तस्मात् हे अर्जुन परमेश्वराराधना हेतुकर्मयुज्यस्व तत्कर्मकौशलरूपं अर्थात् विघ्नरहितं इत्यर्थः । तदेवाह—

॥ श्लोकः ॥

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मवन्धविनिर्मुक्ता पदं गच्छन्त्यनामयम् ॥५१॥

॥ टीका ॥

सुगमार्थः बुद्धिशुद्धत्वमाह । यदेति—

मनीषिणः पुरुषाः कर्मजं फलं त्यक्त्वा कर्माणि कुर्वन्तः सन्तः जन्मबन्धनात् विमुक्ता भवन्ति ॥५१॥

॥ श्लोकः ॥

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च॥५२॥

॥ टीका ॥

फलप्राप्तिहेतु यत् मोहरूपकलिलं बुद्धियोगात् नाम बुद्धिद्वारात् यदा तरिष्यति त्यक्तुं समथा भविष्यति तदा निर्वेदं वैराग्यं प्राप्स्यसि । यत्किञ्चित् श्रुतं वा श्रोतुमिच्छति तस्मात् वैराग्यं प्राप्स्यति अर्थात् पूर्वश्रुतमपि वैराग्येण त्यजति श्रोतव्यमपि त्यजति ॥ ५२ ॥

तदेवाह—श्रुतीति—

॥ श्लोकः ॥

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि॥५३॥

॥ टीका ॥

यन्मतान्तरं विविधं श्रुतिशास्त्रं श्रुत्वा तस्मात् यदा

निश्चला मतिर्भवति तदा समाधिरूपेण अचला बुद्धि-र्भूत्वा योगसिद्धिर्भवति श्रुतिविप्रतिमता यद्भागवत् शास्त्रे आह—यथा महान्ति भूतानि भूतेष्वुच्चावचेषुनु। प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥ एतावा-नेव जिज्ञास्यं तत्वजिज्ञासुना सता । अन्वयव्यतिरे-काभ्यां या सा सर्वत्र सर्वदा ॥ एतदेव विपरीतमतं किन्तु यद्भूम्यादिवत् भगवद्भिन्नाभिन्नभावं प्राप्स्यति अतएव भूम्याः कार्यं घटमठादिवत् न भाव्यं किन्तु केवलभिन्नाऽभिन्नमतं दर्शयितुं कथितं नान्वयव्य-तिरेकस्य पुनश्च यद्न्यायशास्त्रे साधारणकारण-अ-साधारणकारणौ उभौ वृक्षस्य वीजभूमिकावत् दर्श-यति तद्साधारणअसाधारणमतोपि अखण्डानन्दे भगवति न शोभते किन्तु पवनसुगन्धिवानिव अन्व-यव्यतिरेकं घटते तद्यथा भगवद्गीतायां मत्तःपरतरं नान्यत्किञ्चिदस्ति धनञ्जय अपि सर्वमिदं प्रोतं सूत्रे मणिगणा इव। रसोहमप्सु कौन्तेय प्रभास्मि शशिसू-र्ययोः, प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु । पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ । जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु इत्यादि पृथक्मतदर्श-नेन केवलं एकसूत्रवत् न घटितः किन्तु तत्परमा-

न्दस्वरूपभगवतः आनन्द एव सर्वत्र दर्शितः घटतस्तस्मादुत्पत्तिरूपत्वात् तत्रापि यथा निजनिजप्रियद्वारा ज्ञानानन्दध्यानानन्दयोगानन्दादि भिन्नभिन्नरूपेण वर्त्तते तद्वत् परमानन्दस्वरूपः सर्वत्र भिन्नरूपेण न घटते किन्तु स्वयं परमानन्दस्वरूप निजप्रियद्वारा जगदुत्पत्तिस्थितिलयादि कुर्वन् सन् जलादीनि रससुगन्धादीनि सर्वत्र सर्वेषां सुखदायका भवन्ति इत्यादि प्रकारेण विचारद्वारा यदा बुद्धिः स्थिरा भवति तदा योगसिद्धिं लभते इत्यर्थः यदा निजप्रियद्वारा भिन्नाऽऽनन्दं त्यक्त्वा परमानन्दस्वरूप एव प्रियो भवति तदा बुद्धिः स्थिरा भवति अर्थात् पराऽपरा नाम निजप्रकृतिरुभयोः सपरमात्मास्वयमेव हितकारीति विचारणीयं अतएव गीताशास्त्रसदृशमन्यशास्त्रं भवति ॥ ५३ ॥

इदानीं समाधियुक्तं अचलाबुद्धिस्वरूपं अर्जुनः पृच्छति स्थितप्रज्ञेति ।

॥ श्लोकः ॥

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥

॥ टीका ॥

स्थितप्रज्ञस्य पुरुषस्य का भाषा नाम किं तद्रूप

स एव कथं वा आसीत कथं वा व्रजेत कथं वा प्रभाषेत ॥ ५४ ॥

तत्र प्रथमं स्थितप्रज्ञस्य स्वरूपं भगवानाह। प्रजहातीति—

॥ श्लोकः ॥

प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते॥५५॥

॥ टीका ॥

यदा मनोगतान् कामान् सर्वान् प्रजहाति किं कृत्वा जगदात्मानि श्रीनारायणे निजात्मानं नियुज्यते अर्थात् निजप्रियात्मनि जगदात्मानं युज्यते एतदेव स्थितप्रज्ञस्य स्वरूपं ॥ ५५ ॥

तदाचरणमाह—दुःखेष्विति—

॥ श्लोकः ॥

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥५६॥

॥ टीका ॥

अतः निजात्मना सहितः श्रीपरमात्मा सर्वत्र दृष्टः सन् भयक्रोधादिराहितो भवति ॥ ५६ ॥

आसीन व्रजनार्थं वदति। य इति—

॥ श्लोकः ॥

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाऽशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता॥५७॥

॥ टीका ॥

यः आत्मास्वरूपं ईश्वरसंयुक्तं सर्वत्र पश्येत् दैवयोगेन यदि तत्र शुभाशुभप्राप्तिर्भवेत् तत्र न हृष्येत् न द्विष्येत् सर्वत्र एकात्मादर्शनत्वात् इत्यर्थः ॥५७॥

तत्साधनमाह—यदेति—

॥ श्लोकः ॥

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥

॥ टीका ॥

यथा कूर्मः शिरादि अङ्गानि निजस्थाने संकोचनं करोति तद्वत् इन्द्रियाणि यदीन्द्रियार्थेषु चलन्ति तद्दर्शनश्रवणादि अर्थानि वहिर्वृत्तिं त्यक्त्वा आत्मा स्थानेव करोति इत्यर्थः ॥ ५८ ॥

तद्व्यातिरिक्तं दोषमाह—

॥ श्लोकः ॥

विषया विनिवर्त्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोप्यस्य परं दृष्ट्वा निवर्त्तते ॥ ५९ ॥

॥ टीका ॥

अर्थात् निराहारी नाम रोगसंयुक्तो देही स एव रसादिस्वादं त्यक्त्वापि आरोग्यसमये पुना रसप्रियो भवति अतएव मिथ्यात्यागः किञ्च परमात्मा परमानन्दस्वरूपदर्शनेन विषयरूपक्षुद्रानन्देन इच्छां करोति इत्यर्थः ॥ ५६ ॥

तत्परमात्मादर्शनव्यतिरिक्तपुरुषं प्रत्याह। यतत इति—

॥ श्लोकः ॥

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभम्मनः॥६०॥

॥ टीका ॥

अर्थात् अविवेकिपुरुषस्य नाम यथा परमानन्दस्वरूपः परमेश्वरो निजप्रियद्वारा जगदुत्पत्तिस्थितिलयादिक्रीडां करोति प्रमाणं श्रीमति भागवते स वा इदं विश्वममोघलीलः सृजत्यवत्यति न सज्जतेस्मिन् तथा जीवात्मा निजप्रियद्वारा ज्ञानानन्दध्यानन्दयोगानन्दादिर्भवति स एव अविवेकी अर्थात् पृथक् आनन्दरूपाणि विनाशरूपाणि भवन्ति अर्थात् परमेश्वरस्य प्रिय एव सिध्यते निजप्रियो न सिध्यते इत्यर्थः॥

तदेव दर्शयन् तत्राह—तानीति—

॥ श्लोकः ॥

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता॥६१॥

॥ टीका ॥

युक्तनाम पृथक् आनन्दादीनि त्यक्त्वा परमानन्दस्वरूपस्य परायणो भवति स एव युक्त नाम श्रीपरमानन्दस्वरूपस्य गुणानुवादानि शृण्वन्ति वदन्ति तल्लीलारूपाणि पश्यन्ति एतदर्थे यस्येन्द्रियाणि वर्तन्ते तस्य बुद्धिः प्रतिष्ठावती भवति ॥ ६१ ॥

तद्व्यतिरिक्तदोषमाह—ध्यायत इति—

॥ श्लोकः ॥

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात्क्रोधोपि जायते॥६२॥
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंसाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति॥

॥ टीका ॥

अर्थात् बुद्धिनाशात् स एव नाशं प्राप्नोति इत्यर्थः ॥

तत्कारणमाह—रागद्वेषेति—

॥ श्लोकः ॥

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति॥६४॥

॥ टीका ॥

अर्थात् शब्दादि उत्तमविषये रागं कृत्वा मन्द-विषये द्वेषं कृत्वा पुनरुत्तमविषये श्रद्धां करोति इति प्रकारेण विषयासक्तो भवति तत्रात्मा निजेन्द्रियाणि आत्मवशकरणार्थे उत्तममध्यममन्दाविषयान् त्यागार्थं प्रसन्नभावमधिगच्छति ॥ ६४ ॥

तत्फलमाह—प्रसाद इति—

॥ श्लोकः ॥

प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिःपर्यवतिष्ठते ॥ ६५ ॥

॥ टीका ॥

अर्थात् बुद्धिर्निजवशवर्त्ती भवति ॥ ६५ ॥

तद्व्यतिक्रमेण दोषमाह—नास्तीति—

॥ श्लोकः ॥

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्॥

॥ टीका ॥

अर्थात् अशान्तस्य सुखं नास्ति ॥ ६६ ॥

तदेव दर्शयति—

॥ श्लोकः ॥

इन्द्रियाणां हि चरतां यन्मनोनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥६७॥

॥ टीका ॥

अर्थात् पञ्चज्ञानेन्द्रियद्वारा शब्दादि पञ्चविषयान् चरन्ति तदेव मनसा प्रेरणेन तद्मनसः अनुविधि कुर्वतः सतः बुद्धिः अस्थिरा भवति तद्दृष्टान्तमाह जलमध्ये नौका कर्णधारं विना वायुद्वारा भ्रमणं करोति यथाऽनेकस्थाने भ्रमति तद्वत् बुद्धिर्भ्रमति ॥ ६७ ॥

तदुपायमाह—तस्मादिति—

॥ श्लोकः ॥

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता६८

॥ टीका ॥

हे महाबाहो अर्थात् इन्द्रियाणां विजयार्थे बलवान् भव न केवलं वाह्ययुद्धार्थे इन्द्रियार्थेषु नाम वि-

षयभोगेषु यदा सन्तोषितो भवति तदा इन्द्रियाणि तदाधीना भविष्यन्ति इन्द्रियाणि इन्द्रियार्थेषु शब्दादि विषये चरन्ति तेषां निग्रह नाम मनसि विषये यः पुरुषः लोभं न करोति तस्य बुद्धिःप्रतिष्ठावती भवतीत्यर्थः ॥ ६८ ॥

तदेव साक्षाद्दर्शयति । या इति—

॥ श्लोकः ॥

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जागर्ति भूतानि सा निशा पश्यतो मुने।६९।

॥ टीका ॥

अर्थात् ज्ञानवैराग्यद्वारा भगवद्भक्तिप्राप्तिहेतु संयमी नाम निष्कामः पुरुषो जागर्ति धर्मादिचतुर्वर्गफलसाधनार्थे सकामाः पुरुषा जाग्रन्ति तद्व्यतिक्रमरूपा ऊभयोर्निशा दर्शयति अर्थात् भक्तिविषये सकामीनां निशा विषयभोगे निष्कामीनां निशाऽर्थात् दिवसनिशाग्राह्याग्राह्यपक्षो ज्ञेयः ॥ ६९ ॥

तत्फलमाह—निष्कामानां फलम्—

॥ श्लोकः ॥

आपूर्यमाणमचलं प्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।

तद्वत्कामायं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥७०॥

॥ टीका ॥

यथा आपः आपूर्यमाणं समुद्रं प्रविशन्ति ऽचलं भवति तथा सर्वे कामा यं प्रविशन्ति स शान्तिं प्राप्नोति अर्थात् अयमात्मा परमानन्दस्वरूपप्राप्तित्वात् अन्यानन्दं न वांछति, अतएवाह न कामी कामनासिद्धिहेतुयुक्तकामीपुरुषाणां बुद्धिर्न शान्तिर्भवति अयं नाम परमात्मानन्दस्वरूप स एव सर्वकामनाफलयुक्तानां फलदायकत्वात् कामाः शान्तिमाप्नुवन्ति सैव सर्वगतरूपत्वात् समुद्ररूपं वर्णितं इत्यर्थः ॥ ७० ॥

तदा परमानन्दस्वरूपप्राप्तिहेतुमाह—विहायेति—

॥ श्लोकः ॥

विहाय कामान्य यः सर्वान्पुमांश्चरति निःस्पृहः ।
निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥७१॥
एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामान्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥

॥ टीका ॥

सर्वगतलक्षणनिजहृदयप्रियद्वारा दर्शनं अर्थात्

जीवात्मा वा बुद्धिः अशेषविषये प्रियकुर्वती सती तत्
तत्सिद्धिं न प्राप्नोति अतएव परमेश्वरस्य प्रियलक्षणं
तत्परमानन्दस्वरूपप्राप्तिहेतुमाह— तत्सर्वगतस्वरूप
परमेश्वरस्य प्रियस्थानं सर्वत्राणां हृदयेआस्ते अर्थात्
सर्वेषां हृदये यत्प्रियलक्षणं स एव परमानन्दस्वरूपस्य
न हि जीवबुद्ध्यादेयत् जीवबुद्ध्यादेर्यत् यत्प्रियं तन्न
सिद्धिर्भवितत्वात् अतएव उक्तप्रियद्वारा सर्वगतपर-
मानन्दस्य स्वरूप एव विचारणीयम् । तस्मादाह—
विहाय कामान्नाम चतुर्वर्गफलप्राप्तिहेतुकामान्विहाय
तद्भक्तिं कुर्वन् सन् मनबुद्ध्यादिप्रकृतितत्प्रियस्थानं
प्राप्नोति परमानन्दस्वरूपस्य प्रियस्थानं प्राप्नोति त-
त्प्रियो भवतीत्यर्थः तथा जीवात्मापि अहं ममत्वत्या.गे
सति तत्प्रियस्थानं प्राप्नोति तत्फलमाह—एषा ब्राह्मीति
ब्रह्मविचारणी बुद्धिःस एव ब्राह्मी तस्याःस्थितिः एषा
नाम उक्तविचाररूपेण ज्ञातव्या एनं प्रार्थनाविमु-
ह्यति न पुनर्मोहो भवति न विस्मृतिर्भवतीत्यर्थः ।
ब्राह्मी नाम ब्रह्मविचारणीबुद्धिः शान्ति भूत्वा पुनर्न मु-
ह्यति कामनां न करोति तथा जीवात्मापि अहं म-
मतां त्यागद्वारा परमानन्दफलं प्राप्नोति अस्मिन् गी-
तायां मनबुद्धिजीवादयः तत्परमानन्दस्वरूपस्य प-

रापररूपा प्रकृत्या वर्णितं अतएव उभयोः प्रकृत्योः त-
स्मिन् लीने सति ब्रह्मनिर्वाणरूपं वर्णितं तत्र उभौ
प्रकृत्याव्यतिरिक्तोऽपि आनदस्वरूपस्य सच्चिदानदरूपं
विचारणीयं तत्र सैव परमानन्दस्वरूप अन्तर्यामिरू-
पेण वर्तते सति स एव चिल्लक्षणं तथा भक्तानां यत्
वांछितरूपेण प्रकटीप्रभवति सैव सल्लक्षणं इति प्र-
कारेण स्यामन्तकाले ब्रह्मनिर्वाणपदं दर्शितं स्थिति
कालेपि तदुभौ प्रकृत्या सच्चिदानन्दरूपेण विचारे
सति स्थितिसमयेपि निर्वाणरूपं चिन्तनीयं तत्र जी-
वभूता प्रकृत्या यद् ब्रह्मादिपिपीलिकापर्यन्त एकक्षेत्र-
ज्ञरूपेण वर्तते सति स एव सद्रूपं चिन्तनीयं तत्रा-
नुभवलक्षणयुक्त चिद्लक्षणो भवति सुखदुःखादि
अभुक्तरूपेण वर्त्तते सति आनन्दलक्षणो भवति. तत्र
तत्परमानन्दस्वरूपस्य त्रिकालज्ञा प्रकृत्या स एव एकरस
ज्ञानरूपत्वात् सद्लक्षणो भवति ज्ञानरूपत्वात् चि-
ल्लक्षणो भवति तद्विज्ञानद्वारा अशेषवेदशास्त्रादिवाणी
निर्मितं आनन्दलक्षणो भवति तत् कृत् वेदे त्रैका-
लिकवाणी वर्णिते सति सदाख्यानं लभते तद्वाणी
अर्थरूपयुक्ता भवती सती चिद्रूपा भवति सैव अर्थ
प्रसन्नकारित्वादानन्दलक्षणो भवति तन्मन्त्रद्वारा यत्

कालरूपदेवता प्रकटत तत्प्रमाणं देवाधीनं जगत् स-
सर्वं मन्त्राधीनाश्च देवता अन्नप्रमाणं तावन्न म्रियते
जन्तुर्यावदास्ते इहान्तकः सैवकालरूपदेवता राशि-
चक्ररूपेण वर्त्तते सन् अशेषकल्पादिरूपेण वर्त्ततः सन्
सदाख्यानं प्राप्नोति तत्कालानुसारद्वारा ज्ञानप्राप्ते
सति चिदाख्यानं लभते सैव अशेषकर्माणां फलदा-
यके सति आनन्दलक्षणघटतः तत्कालस्य शक्ति
अव्यक्तरूपा अशेषदेवादियोनीनां कारणरूपेण स-
दाख्यानं लभते अशेषयोनिस्थाने यद्विचित्रचातुर्यता
दर्शतः सैव चिल्लक्षणं ज्ञेयं तच्चातुर्यतासुखदायकरू-
पेण वर्त्तते सति आनन्दलक्षणो भवति बुद्धिश्चातु-
र्यतादेवमनुष्यादितिर्य्यग्योनिस्थानेषु पृथक् पृथक् व्य-
क्तास्ते यद्बुद्धिःपूर्वाभ्यासे गृह्यते सैव सल्लक्षणं सैव
चातुर्यतारूपेण चिल्लक्षणं भवति तत्र यन्निस्कामा-
रूपेण श्रीभगवद्भक्तिः गृह्यते स एवानन्दरूपः अर्थात्
तद्भक्तिर्भाधकताऽभावेनाऽऽनन्दलक्षणं भवति अत-
एव उभौ प्रकृतिः सच्चिदानन्दरूपत्वात् ऐक्यरूपेण
भाव्यन्ते सति स्थितिकालेपि ब्रह्मनिर्वाणरूपेण वर्त्तते
इत्यर्थः अज्ञातमतेन तत्र मुमुक्षवो जना क्षेत्रज्ञतत्वस्य
पृथक् भावनारूपेण यज्जगन्मिथ्यारूपविचारद्वारा

मुक्तिसाधनां कुर्वन्ति तदेवाऽविवेकं तस्मात् निष्कामनारूपेण यद्भगवतः भक्तिं कुर्वन्ति सैव भागवतधर्मएव सत्यं तद्भागवतधर्मप्रधानवृत्तेनाह—

न नाकपृष्ठं न च पारमेष्ठं न सार्वभौमं न रसाधिपत्यं।
न योगसिद्धिरपुनर्भवम्वा समंजसात्वा विरहय्यकाङ्क्षे ॥

अतएव चिद्रूपकृत्या विना पुरुषरूपेण न शोभते, अतएव त्रिकालज्ञा प्रकृत्या विना केवलं चिद्रूपः पुरुषो न शोभते ।

इति गीतायां द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

---

उक्त परमभागवतधर्म अज्ञातमतेन अर्जुन आह—
ज्यायसीति—

॥ श्लोकः ॥

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥१॥
व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥२॥

॥ टीका ॥

अर्थात् हे भगवन् यर्हि कर्मणि सकाशात् बुद्धिर्ज्यायसी श्रेष्ठ तर्हि-घोरकर्मणि मां त्वं कथं नियो-

जयसि, तथा च ज्ञानं कर्म इति भ्रमनीकवाक्येन मम-बुद्धिंभ्रमयसि तस्मात् एकमेव निश्चितं वद यस्मादहं श्रेय आप्नुयाम् इत्यर्थः। तदुत्तरं—

श्रीभगवानुवाच।

॥ श्लोकः ॥

लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्॥३॥
न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥४॥

॥ टीका ॥

अर्थात् कर्मणामारम्भं विना नैष्कर्म्यं नाऽश्नुते कर्मवासनायुक्तपुरुषाणां केवलं गृहत्यागरूप यत् परिव्राजकरूपसंन्यासद्वारा न समाधिः, सिद्धिं भवति ॥४॥

तत्कारणमाह—न इति—

॥ श्लोकः ॥

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥

॥ टीका ॥

जातु नाम मन इन्द्रियाणि अकर्म नाम कर्मकृद्विना क्षणकर्ममपि तिष्ठति न स्थिरो भवति सत्वरजतमगुणैः

जातं यदध्यात्माधिभूतादिदैवात्मकानि अवशः सन् सात्वकराजसतामसादि कर्माणि करोति—

यथा वायुः ध्वजां भ्रमयति तथा कालो गुणान् भ्रमयति गुणव्यतिकरकालः अर्थात् कालगमनद्वारा कदाचित् सत्वगुणो वर्द्धते कदाचिद्रजो वर्द्धते कदाचित्तमो वर्द्धते इत्येवं गुणाः कालवशवर्त्तिनः तत्र गुणसकाशात् इन्द्रियभूतमनांसि जातानि तत्राऽऽकाशादि पंचाधिभूतानि तमोगुणस्य कार्यरूपाणि अध्यात्मकानि दशेन्द्रियाणि रजोगुणस्य कार्यरूपाणि अधिदैवानि इन्द्रियाधिष्ठादिग्वातादि तृदेवाः सतोगुणकार्यरूपा इत्युक्त देवानामंशः कालगुणैर्वशीभूतः सन् प्रेरणद्वारा निजनिज-अंशानि मनसि रूपेण देहे प्रवेशयन्ति स एव मनः कालगतिसङ्गात् यत् यत् इन्द्रियाणि यत् यत् देवाः तत् तत् धामं यदा प्राप्नोति तदा तत् तदिन्द्रियाणां कार्यसिद्धिः स्यात् नोचेत् वधिरान्धमूकादि भवेत् अतएव कालगुणकर्माधीनत्वात् जातु कर्मकृत् कर्मकृत्यं विना क्षणमपि न तिष्ठति तत्र यदाह न च संन्यसनात् नाम गृहत्यागरूपपरिव्राजकरूपसंन्यासात् समाधिः सिद्धिर्न भवति अर्थात् संन्यासोपि देहसङ्गात् भवति तद्देहोपि कालगुणाधीनत्वात् इति तात्पर्यम् ॥ ५ ॥

तत्राह—कर्म इति—

॥ श्लोकः ॥

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥

॥ टीका ॥

अर्थात् वाक्पाणिपादवायु उपस्था इति पंचकर्मेन्द्रियाः ब्रह्मचार्यादिव्रतद्वारा संयम्य यद् मनसिद्वारा श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणपश्वज्ञानेन्द्रियद्वारा यद् भोगार्थे स्पर्शरूपरसगन्धादीनि तन्मात्राणि स्मरणं करोति तस्य विमूढस्य ब्रह्मचर्यादिवृत्तिः न सिद्धिर्भवति इत्यर्थः ॥ ६ ॥

तत्र किं कर्तव्यं तत्राह—य इति—

॥ श्लोकः ॥

यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥

॥ टीका ॥

अर्थात् यस्य मनसि संयम्य नाम फलवासनारहितः सन् इन्द्रियाणिद्वारा श्रीभगवत्परिचर्यादीनि कर्माणि तथा श्रवणादिद्वारा तद्गुणानुवादादीनि असक्तनाम फलादि आसक्तरहितं करोति स एव विशि-

ध्यते विशिष्टपदवीं लभते—यः पुरुषः ज्ञानेन्द्रियाणि संयमनं कृत्वा अर्थाद्विषयभोगवासनां त्यक्त्वा मनसा कर्मेन्द्रियद्वारा भगवत्परिचर्य्यां जपस्मरणादिकं करोति असक्तः फल इच्छारहितः स विशिष्यते ॥७॥

तस्मादाह—

॥ श्लोकः ॥

नियतं कुरु कर्म त्वं कर्मज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिध्येदकर्मणः ॥८॥

॥ टीका ॥

अकर्मणः सकाशात् भगवदाराधनारूपकर्माणि ज्यायो नाम श्रेष्टानि अतएव नियतं भगवदाराधनरूपकर्म कुरु यस्मात् अकर्मणः कर्मकृत्यं विना शरीरयात्रापि न सिद्धेत न निर्बाहो भवति इत्यर्थः—

अकर्माणि सकाशात् नाम अकर्तृत्वसकाशात् कर्तृत्वकर्माणि श्रेष्टानि तत्कारणमाह शरीरे इति अर्थात् अकर्तृत्वसङ्गात् शरीरयात्रापि न निर्वहते इत्यर्थः ॥ ८ ॥

तत्र शुद्धकर्माणि संक्षेपेण दर्शयति। यज्ञार्थात् इति—

॥ श्लोकः ॥

यज्ञार्थात्कर्मणोन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्मकौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥

॥ टीका ॥

अयं लोकः यद्यपि सङ्कल्पकर्माणि सङ्गात् बन्धरूपो भवति तत्कर्मणि यज्ञ नाम विष्णुप्रीत्यर्थे सर्गादि फलसंयुक्तरहितं करोति तत्कर्मबन्धरूपो न भवति अन्यत्र कर्मबन्धनं भवति ॥ ९ ॥

एतत् संक्षेपेन उक्त्वा पुनर्विस्तारितरूपेण वर्णयति । सहयज्ञा इति—

॥ श्लोकः ॥

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥
देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥
इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्ता न प्रदायैभ्यो यो भुंक्ते स्तेन एव सः ॥ १२ ॥

॥ टीका ॥

अर्थात् प्रजापतिः नाम ब्रह्मा सहयज्ञाः नाम मननादि कर्माणि सङ्गात् मरीच्यादि प्रजानामुत्पत्ति कृत्वा तेषां प्रति आह, अनेन कर्मसङ्गात् भवतामुत्पत्तिः कृता अतएव सर्वे यज्ञेन प्रतिष्ठिता भवत अ-

र्थात् यज्ञकर्माणि कर्त्तव्यानि, तत्फलमाह, अनेन यज्ञेन देवा भावयन्तः सन्तः ते देवा युष्मान्भावयन्तु अतएव परस्परभावनायुक्तं सन् युष्माकं श्रेयो भवति उक्तरोचिवचनद्वारा कर्मणि प्रवृत्तिं कृत्वा तदऽकर्तृत्वपक्षे भयं दर्शयन् इष्टान्भोगानिति यज्ञभाविता-देवा वः युष्मभ्यं इष्टान्मनःकाल्पितान् भोगान् दास्यन्तु ते देवाऽनर्चितपक्षे भयं दर्शयन् ये देवा इष्टान् भोगान् दास्यन्ति तेषामनर्चने दण्डभागी भवति इत्यर्थः ॥ १० ॥ ११ ॥ १२ ॥

पुनरोचिकभयानकवचनद्वारा कर्मणि प्रवृतिं जनयति । यज्ञशिष्टेति—

॥ श्लोकः ॥

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्विषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ।१३।

॥ टीका ॥

अर्थात् पूर्वं देवार्पणमन्नं कृत्वा पश्चादन्नामृतमयो भवति फलमाह तेषां किल्विषं नाशं प्राप्नोति ये तु देवार्चनं विना केवलमात्मार्थे देहपोषणार्थं पचन्ति ते पापान् भुजन्ति दण्डभागिनो भवन्तीत्यर्थः ॥१३॥

उक्तप्रकारेण संक्षेपरोचिभयावनविस्तारितादि-

वचनद्वारा कर्मणि प्रवृत्तिं कृत्वा इदानीं यथार्थरूप-वचनं वदति । अन्नादिति—

॥ श्लोकः ॥

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥१४॥
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्॥१५॥
एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति॥१६॥
यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते॥१७॥

॥ टीका ॥

आर्थत् यदक्षरस्वरूपात् शब्द ब्रह्मोत्पत्तिर्भवति स एव सर्वगतअक्षर ब्रह्महृदयेपि अन्तर्यामिरूपेण वेदाख्यानं ब्रह्मविरचनं कृत्वा ब्रह्मणा मुखद्वारा प्रकाश-कृतं, तदाह श्रीभागवते तेन ब्रह्महृदाय आदिक विना मुह्यन्ति यत्सूरयः आदिकविः ब्रह्मणः हृदये शब्द ब्रह्म तेनै प्रकाशते इति यद्वेदार्थे देवाअपि मुह्यन्ति तद्वेदे चतुर्वर्गसुष्मादिफलसाधनहेतुकर्माणि निरूपितं तदाह

कर्म ब्रह्मसमुद्भवः तत्कर्माणि विसर्गरूपाणि अर्थात् प्रथमयजमानद्वारा यदुत्पत्तिर्भवति तदेव सर्गरूपं यदेव सर्वदेवसूर्यमण्डलात् फलरूपेण वर्षति तदेव विसर्गरूपं तत्र यदाह—शुक्ले देवान् पितॄन्कृष्णे तर्पयान्त्यमृतेन यः। यश्चराजा द्विजातीनां तस्मै सोमात्मने नमः॥ अर्थात् चन्द्रमण्डलात् यदमृतं वर्षति तदेव सूर्यरश्मेः मेघरूपभूत्वा फलरूप वर्षति वर्तते सति यदफलार्थाः कामनारूपाः पुरुषाः स एव अन्नमयो भूत्वा पुनरुद्भवो भवति तत्राह समस्तकामनां त्यक्त्वा भगवद्भक्तिप्राप्त्यर्थे उक्तान्तर्यामिरूपाक्षरब्रह्मणे कर्माणि अर्पणं करोति तदेव चक्रवत् भवति अर्थाद्यस्मादुत्पत्तिर्भवति तस्मात्प्राप्तत्वात् चक्राकारं कथितं एतत् चक्ररूपं यो न वर्त्तते स एव अघायुर्नाम पापरूपं जीवति पुनर्जन्म न निवृत्तित्वात् तद्दोषनिवारणार्थे आह यस्य इति अर्थात् यदन्तर्यामिरूपाक्षरात्मने यस्य रतिर्नाम प्रीतिः तथा तद्भजनरूपेण य तृप्तिर्भवति तद्भजनं विना जन्मजन्मान्तरे अन्यस्पृहा न करोति तस्य पुनर्जन्मरूपकार्यरूपो न घटितः अर्थात् स्मरणविस्मरणं विना न मृत्युरूपः मृत्योरभावे न जन्मरूप तस्य अन्यदेवादिऽर्चन कर्म कर्त्तव्यम् नास्ति ॥ १७ ॥

अतएव आह—नैव तस्य कृते इति—

॥ श्लोकः ॥

नैव तस्य कृते नार्थो नाकृते नेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥१८॥

॥ टीका ॥

सर्वभूतेषु नाम यद् यज्ञभोगयज्ञादि देवता वर्णिताः तेषां प्रति यत्किंचित् फलाकांक्षां न कुर्वन्ति केवलं आत्मरतिः भवति तेषां कर्मकृतेपि बन्धरूपो न भवति तथा कर्म न कृतेपि न किंचिद्दोषं भवति अर्थात् जगत्कारणकर्त्तारूप परमात्मा आत्मास्थाने निष्कामरूपेण प्रवृत्तिरूपत्वात् इत्यर्थः ॥ १८ ॥

तत्राह—तस्मादिति—

॥ श्लोकः ॥

तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥१९॥

॥ टीका ॥

अर्थात् फलकांक्षां विना कर्त्तव्यकर्म कुरु तत्फलमाह—परं श्रेष्टपदमाप्नोति ॥ १९ ॥

तद्दृष्टान्तेन दर्शयति । कर्मणा इति—

॥ श्लोकः ॥

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन् कर्त्तुमर्हसि ॥२०॥

॥ टीका ॥

आत्मानन्दस्य जनकविदेहस्य कर्म कुर्वतः सतः ज्ञानभ्रष्टो न स्यात् तथा मम परमेश्वरस्य यद्यपि किञ्चित्कर्त्तव्यं भोक्तव्यं नास्ति तथापि लोकसंग्रह नाम लोकानां शिक्षार्थं अहमपि कर्म करोमीति पश्यन् त्वमपि कर्त्तुमर्हसि—

तत्र जनकराजदृष्टान्तः ,आत्मारामा रूपेणघटितः किंच यद्भगवानाह मामपि लोकानां कर्मसंग्रहनार्थे कर्माणि कुर्वन्ति तत्र जनकस्य विलक्षणारूपेण भगवद्रूपं चिन्तनीयं तद्यथा श्रीभागवते तृतीयस्कन्धे श्रीभगवान् कपिलदेव आह—ज्ञानयोगस्य मन्निष्टं नैर्गुण्यं भक्तिलक्षणं, द्वयोरप्येकमेवार्थं भगवच्छब्दलक्षणम्, नैर्गुण्यं ज्ञानयोगं तथा मन्निष्टं नाम मम सगुणस्वरूप यद्भक्तिलक्षणम् तद्द्वयोरपि एकार्थं दृष्टान्तेन दर्शयन् किं भगवतशब्दलक्षणं नाम ऐश्वर्यवालक्षणं तल्लक्षणं दृष्टान्तरूपेण दर्शितं, यथेन्द्रियैः पृथक्द्वारैरर्थो वहुगुणाश्रयः। एकोनानेयते यद्वत् भग-

वान् शास्त्रवर्त्मभिः ॥ यथा एकएवरसरूपादिसंयुक्त वस्तु इन्द्रियद्वारा नाना प्रतीयते तथा भिन्नशास्त्रेपि निर्गुणसगुणरूपभेदवर्णितः तस्मात् आह—अहं कैवल्यरूपो भगवान् लोकानां शिक्षार्थं कर्माणि आचराणि इति—तथा जनकविदेही दृष्टान्त केवलविदेहीरूपेण न मान्यते किन्तु तत्त्वज्ञानद्वारा गूढ़रूप एव विचारणीयः, यदेव श्रीस्वामीतुलसीदासेन कथितं। चौपाई—वन्दौं परिवर सहित विदेहू। जिनहि रामपद गूढ़ सनेहू ॥ १ ॥ जोग भोग मह राखहि गोई। रामविलोकित प्रकटहि सोई ॥ २ ॥ अर्थात् केवल विदेहीरूपं न मन्नितं किन्तु श्रीरामभक्तियुक्तमेव जाननीयं तद्भक्तिगुतलक्षणमाह—जोग भोग इति अर्थात् यथा संपुटस्यद्वाक्यं मध्येरत्नगुह्यरूपेण वर्त्तते तद्वाद्विदेही अन्तष्करणे जोगभोगरूप संपुटे रामभक्तिरूपमणिर्गुह्यरूपेण वर्त्तते स एव लक्ष्मणयुक्त रामदर्शनेन भक्तिरत्नः प्रकटीकृतः अर्थात् जीवात्मनि परमात्मनि अभङ्गरूपेण अर्थात् नृसिंहरूपेण इति आत्मतत्त्वमिष्टाद्वारा विदेहभावं प्राप्तः तथैव लक्ष्मणसंयुक्तश्रीरामेदृश्यमाने सति निश्चयं कृतं किंच यद्भक्तिज्ञानद्वारा बुद्ध्यादीनि त्यक्त्वा सैव अन्यभक्तिहीन

ज्ञानिनामिव न माननीयं यथा अन्यज्ञानी पीत्वा यथावप्रजहाति तत्फलम् अर्थात् रसं पीत्वा यथा फलं त्यजति तथा बुद्धिविवेकं गृहीत्वा बुद्धित्यागं कर्त्तव्यं इति प्रकारेण बुद्धित्यागं न भवति तद्विवेकरूप रस-ग्रहणत्वात् अन्यज्ञानी यद्वदति किं प्रारब्धेन सम-र्पितं स्व वपुषा इति अर्थात् प्रारब्धागामी सञ्चित-रूपकर्माणि यथा वत्सो निजमातरं गां गृह्यते त-द्वत्संचितकर्माणि कर्त्तृत्वेन गृह्यते तत्रैव यथा देहाभि-मानेन यत्कर्माणि कृत्वा तदेव ब्रह्माभिमानी द्वारेन यद्बुद्धिं त्यजति तदेव पूर्गो रूपवत् असम्भवात् व-त्सरूपसंचितकर्माणि न प्राप्यते तथापि फलकांक्षां विना आगामी कर्मापि न प्राप्यते तद्वत् प्रारब्धक-र्मापि चंचलमनमनस्सङ्गात् बुद्धिमान् पुरुषः न वि-श्वासं करोति अतएव कन्यावद् बुद्धिः त्यजनीया परमेश्वरार्पणा कर्त्तव्या तत्परमेश्वरपरीक्षार्थे काल-रूपं श्रीशिवधनुःभञ्जनं प्रतिज्ञा यत्कृता तदेव श्री-रामचन्द्रेण कृतायां प्रतिज्ञायां सत्यां तस्मै श्रीरामाय जानकी दत्ता सैव यथा लक्ष्मणः अनन्यभावेन श्री-रामं आचरति तथा सापि रामेण सह वनं जगाम अतएव तृतीयस्कन्धे कपिलदेवेन कैवल्यरूपो वर्णितः

तदेव साक्षात्काररूपेण दर्शितं तत्र भगवान् अर्जुन-माह—हे अर्जुन! लोकानां संग्रहणार्थे फलवासनां त्यक्त्वा श्रीपरमेश्वरार्पण कर्माणि कर्तुमर्हसि इत्यर्थः।२०।

इदानीं परमेश्वरस्य तथा विदहस्य कर्तृत्वकारणमाह—यदिति—

॥ श्लोकः ॥

यद्यदाचरति श्रेष्टस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥ २१ ॥

॥ टीका ॥

सुगमार्थः । इदानीं भगवान्निजकर्मद्वारार्जुनं बोधयति । न इति—

॥ श्लोकः ॥

न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किंचन ।
नानावाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥२२॥

॥ टीका ॥

त्रिषु लोकेषु नाम महदादिसत्यलोकपर्य्यन्तेषु यद अनसनानां ब्रह्मचर्यब्रतधारीणां प्राप्तस्थानं यद्वा यज्ञादिकर्माणां पुरुषाणां स्वर्गभोगस्थानं यत्तत् कर्मोपार्जनं लोकानां भूलोकस्थानं त्रिषु लोकेषु किंचन मम कर्त्तव्यं तत्कारणमाह नानावाप्तमिति अर्थात्

किंचन अनावाप्तं न वाप्तरूपं च न अर्थात् त्रिलोकाः सर्वदा एव मम वशवर्त्तिताः तत्रापि अहं कर्म सु वर्त्तामि त्रिलोकाः मदधीनत्वात् मम किंचन अनावाप्तं न तथा तेषु मम किंचित्प्राप्तरूपमपि नास्ति अर्थात्तेषु मदीयकिंचित्स्पृहा नास्तीत्यर्थः ॥ २२ ॥

तत्कारणमाह—यदीति—

॥ श्लोकः ॥

यदि ह्यहं न वर्त्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्वशः ॥२३॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः॥२४॥

॥ टीका ॥

अहं अतन्द्रितः नाम अज्ञानरहितोऽर्थात् त्रिकालज्ञानयुक्तः सन् निजेच्छा नृसिंहादिदैत्यरूपेण लोकानां वधरूपकर्माणि यदि ह्यहं न वर्त्तेयं तदा इमे सर्वे लोकाः उत्सीदेयुः नाम नाशवन्तो भवेयुः तदेव इमाः प्रजा उपहन्यामि तथा सङ्कररूपकर्त्तारः पुरुषाः भवेयुः यद्यहं दैत्यान् न हन्यामि तर्हि लोकानां नाशकर्त्ताप्यहं भवामि तथा मम कर्तृत्व-अदर्शनेन लोकाःसङ्कररूपा भवन्ति तर्हि सङ्करस्या-

प्यहं कर्त्ता अर्थाद्यथाह 'सर्वयोनिषु कौन्तेय मूर्त्तयः संभवन्ति याः। तासां ब्रह्ममहद्योनीरहं वीजप्रदः पिता'॥ अर्थात्सर्वलोकानां उत्पत्तिकर्त्ताहं परमेश्वरः एतदऽज्ञानमतेन मम कर्तृत्व विना यद्राश्यात्मक कालचक्रद्वारा जगद्व्यक्ताऽव्यक्तरूपो भवति इति मन्यन्ते तदेव सङ्करूपकर्म तदेव सङ्करूपकर्त्ताऽहं स्यां। अतएव लोकानां शिक्षार्थं रक्षार्थं मदीय ईश्वरज्ञापनार्थं कर्म करोमीति भावः इत्यर्थः॥ २४॥

तस्माच्छुद्धरूपकर्माणि वदति। सक्ता इति—

॥ श्लोकः॥

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत।
कुर्याद्विद्वांस्तथासक्ताश्चिकीर्षुर्लोकसंग्रहम्॥२५॥

॥ टीका॥

अविद्वांसः नाम मम भक्तिरहितपुरुषाः यथा फलासक्ताः सन्तः कर्माणि कर्मत्यागोपदेशं न वदेत् कुर्वन्ति तथा विद्वान् नाम ममभक्तिरसिकः पुरुषः फलासक्तरहितः सन् कर्माणि कुर्यात् अर्थात् अन्यलोकानां शिक्षार्थं मद्भक्ताः चिकीर्षुवरकर्माणि कुर्वन्ति, भगवद्विस्मरणरूपदुःखनिवारणार्थं इत्यर्थः।२५।

इदानीं भक्तिअप्राप्य जनानां प्रति आह—नेति—

॥ श्लोकः ॥

न बुद्धिभेदं जनयेत् अज्ञानां कर्मसङ्गिनां ।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥२६॥

॥ टीका ॥

भक्तिरहितकर्मफलाशासक्तजनानां बुद्धिभेदं न जनयेत् किन्तु कृष्णार्पणकर्माणि समाचरन् सन् विद्वान्पुरुषः श्रीकृष्णार्पणकर्मसु संयोजयेत् तत्कृष्णार्पण कर्मसमाचरन् सन् स्वयमेव भक्तिं ज्ञानं प्राप्नोति इत्यर्थः ॥ २६ ॥

इदानीं अविदुषां पुरुषाणां लक्षणमाह—प्रकृतेरिति—

॥ श्लोकः ॥

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ॥२७॥

॥ टीका ॥

गुणैः कर्माणि नाम यद् स्वर्गवासनासंयुक्त कर्माणि तदेव सत्वगुणैः कर्माणि यदीह लोके पुत्रधनादिवासनासंयुक्तकर्माणि तदेव रजोगुणैः कर्माणि यद्वा शत्र्वादिवधवासनासंयुक्तकर्माणि तदेव तमोगुणैः कर्माणि तदेव मनइन्द्रियादिद्वारा तत्कर्म कुर्वन् सन् तदेवाहमहं कर्त्ता इति मन्यते स विमूढ उच्यते ॥ २७ ॥

तत्र ज्ञानिनां लक्षणमाह—तत्ववित् इति—

॥ श्लोकः ॥

तत्ववित्तु महाबाहो गुणकर्मविभागयोः ।
गुणागुणेषु वर्त्तन्ते इति मत्वा न सज्जते ॥२८॥

॥ टीका ॥

तत्वज्ञातापुरुषाः उक्तरूप गुणकर्माणि गुणेषु नाम मनइन्द्रियस्थानेषु वर्त्तते इति मत्वाऽहङ्कारे न बध्यते अहं कर्त्तास्मि इति न मन्यते इत्यर्थः ॥ २८ ॥

इदानीं कर्मविदां पुरुषाणां लक्षणमाह—प्रकृतेरिति—

॥ श्लोकः ॥

प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ।२९।

॥ टीका ॥

प्रकृतेर्गुणसंमूढा नाम रजोगुणात्मकमहं कर्त्ता इति मन्यते तमोगुणसंमूढः अहं भोक्ता इति मन्यते सतोगुणसंमूढः अहं भर्त्ता इति मन्यते कृत्स्नविन्नाम कर्मवेत्ता उक्तप्रकारेण कर्त्तृणां लक्षणं वेत्ता सन् मन्दकर्मसु नाम हिंसादिकर्मसु न सज्जते नाम न प्रेरयति ॥ २९ ॥

उक्तप्रकारेण वैदिकीलौकिकमतं वर्णयित्वा इदानीं कैवल्यस्वरूप श्रीकृष्णचन्द्रो निजभक्तिरूपोपदेशं वदन् कुर्वन् सन् आह—मयीति—

॥ श्लोकः ॥

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥३०॥

॥ टीका ॥

अध्यात्मचेतसा नाम कैवल्यभावनायुक्ताः पुरुषाः मयि परमात्मनि प्रीत्यर्थेन सत्कर्माणि कुर्वन्ति तत्रापि फलाशारहितः सन् मदीयदेहादि इति भावरहितः सन् कर्माणि करोति अतएव त्वमपि विगतज्वरो नाम चिन्तारहितः सन्ममाज्ञापरिपालनं कुरु ॥ ३० ॥

तत्फलमाह—य इति—

॥ श्लोकः ॥

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेपि कर्मभिः ॥३१॥

॥ टीका ॥

ये मानवाः श्रद्धावन्तः उक्तप्रकारकर्मणि वर्तन्ते तेपि वैदिकी तान्त्रिकी कर्मबन्धात् विमुच्यन्ते ॥३१॥

तद्भागवद्धर्मनिन्दकं प्रति आह—य इति—

॥ श्लोकः ॥

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः॥३२॥

॥ टीका ॥

ये पुरुषाः पूर्वोक्तं मे मतं अभ्यसूयन्तः सन्तः नानुतिष्ठन्ति सर्वज्ञानसंयुक्तानपि अहं ज्ञानीति विमूढाभावेन नष्टान् मूर्खान् जानीहि इत्यर्थः ॥ ३२ ॥

तत्कारणमाह—

॥ श्लोकः ॥

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति॥३३॥

॥ टीका ॥

ये तु प्रकृतिराधिना भवन्ति ते प्रकृतिसङ्गमेव भ्रमन्ति। ज्ञानवानपि मनबुद्धिस्वस्याःप्रकृत्याः शदृशा चेष्टते तर्हि किं निग्रहः करिष्यति न किंचिदपि केवलं कथनमात्रं हि ज्ञानं इत्यर्थः ॥ ३३ ॥

इदानीं ज्ञानस्य माहात्म्यं आह—इन्द्रियस्येति—

॥ श्लोकः ॥

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥३४॥

॥ टीका ॥

इन्द्रियस्यार्थे नाम शब्दस्पर्शरूपरसगन्धविषयेषु रागद्वेषौ व्यवस्थितौ नाम उत्तमविषयेनुरागं मन्दविषये द्वेषं तयोरुभयोरिन्द्रियेन्द्रियस्यार्थेषु यो वशं नागच्छेत् तौ उभौ परिपन्थिनौ नाम परित्यागलक्षणौ ॥ ३४ ॥

अतएवाऽऽह तन्द्रियविषयत्यागीनां लक्षणमाह—श्रेयानिति—

॥ श्लोकः ॥

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥३५॥

॥ टीका ॥

अर्थादर्जुनस्य जातिधर्मद्वारा युद्धेन नियोजितः किन्तु ज्ञानद्वारा युद्धे प्रकृतिकृतं तद्यथाह नत्वेवाहं जातुनाशमित्यादिप्रकारेण यत् जीवस्य स्वधर्मं पूर्वं वर्णितं तद्वदस्मिन् स्थानेपि कथितं, किं च स्वधर्मः श्रेयान् अर्थात् विगुणः नाम गुणव्यतिरिक्तं यज्जीवस्य स्वधर्मः तद्धर्मे निधनमपि श्रेयः अर्थान्मुक्तिभागी भवति प्रकृतिधर्मं परधर्मो नाम यदहङ्कारयुक्तो वर्णाश्रमधर्मादीनि समस्तवेदशास्त्रानुष्ठितानि रूपाणि सैव भयावहः नाम जन्ममृत्युदायकः इत्यर्थः ॥३५॥

तत्रार्जुन आह—अथेति—

॥ श्लोकः

अथ केन प्रयुक्तोयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः॥३६॥

। टीका ॥

अर्थात् यर्हि देहादिपरे आत्मतत्वं तर्हि केन प्रयुक्तोयं पूरुषः पापं चरति—केन प्रयुक्तः अयं पूरुषः पापरूपमहङ्कारं गृह्णाति ज्ञानवान्पूरुषो न इच्छति तदपि बलादपि केन नियोजितः ॥ ३६ ॥

तदुत्तरमाह—

श्रीभगवानुवाच ।

॥ श्लोकः ॥

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्॥३७॥
धूमेनाव्रियते वन्हिर्यथादर्शो मलेन च ।
यथोल्वेनावृतो गर्भस्तथा तेनेदमावृतम् ॥३८॥
आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥३९॥
इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्तदेहिनम् ॥ ४० ॥

॥ टीका ॥

महाशनरूपकामस्तथा तत् भङ्गरूपेण महापाप-रूपं क्रोधं इह पुरुषस्य बुद्धे वैरिरूपं रजोगुणोद्भवरूपं दृष्टान्तमाह—पुरुषस्य बुद्धेरावर्णं करोति यथा धूमो वह्नेरावर्णं करोति किन्तु प्रगटरूप वह्नेरावर्णं नास्ति तत्राह यथाऽऽदर्श इति अर्थात् आदर्शरूपदर्पणद्वारा मुखं दर्शयति सैव यथा मलेनाच्छादयति अर्थात् अहं ज्ञानी इत्यहङ्काररूपमलेन बुद्धिर्भ्रष्टा भवति किन्तु बुद्धिभ्रष्टे पुरुषस्य दूषणो न भवति तत्राह य-थोल्वेन अर्थात् यथोल्वावर्णद्वारेण गर्भस्थपुत्रो वा कन्या न दर्शयति तद्वज्जीवस्य शुद्धस्वरूपं न दर्शयति तद्वत् पुरुषस्य अहं ज्ञानी अहमज्ञानीति भावनायुक्तः सन् स्वस्य रूपं न दर्शयति तथा हि मुमुक्ष्वादियुक्तः स्वरूपं न पश्यति अतएव आह कामरूपेणेति यथा हुतियुक्तवह्निः तृप्तिं न प्राप्नोति तथा कामयुक्तपुरु-षोपि शान्तिं न प्राप्नोति तत्कारणमाह—इन्द्रिया-णीति अर्थात् कामस्य क्रोधस्याधिष्ठानं इन्द्रियमनबु-द्धिस्थाने भवति तदेव मदीयरूपभावने सति पुरुषस्य शुद्धस्वरूपमावर्णं करोति—पुरुषस्य आत्मतत्त्वज्ञाप-नार्थं यद्ज्ञानं तमेव ज्ञानं कामक्रोधौ उक्तउल्वादि

दृष्टान्तवत् आवरणं करोति अर्थात् कामक्रोधाधीनो भूत्वा आत्मतत्वं विस्मरणं भवति इत्यर्थः ॥ ४० ॥

तदुपायमाह—तस्मादिति—

॥ श्लोकः ॥

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥४१॥

॥ टीका ॥

यस्मात् इन्द्रियमनबुद्धिस्थाने कामक्रोधस्याधिष्ठानं आस्ते तस्मादौ तदिन्द्रियाणां नियम्य अर्थाद्विषयादि भोगवासनां त्यक्त्वा श्रीपरमेश्वरस्य भावनायुक्तः सन् इन्द्रियसंयनं कुरु पश्चात् विषयभोगभावनारूपं पाप्मानं भक्तिबाधकं कामक्रोधं जहि विनाशय त्यागं कुरु ॥ ४१ ॥

तत् कामक्रोधं विजयहेतु उपायमाह। इन्द्रियाणीति—

॥ श्लोकः ॥

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥४२॥
एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥४३॥

॥ टीका ॥

अर्थात् कर्मेन्द्रियेभ्यः ज्ञानेन्द्रियाणि पराणि श्रेष्ठरूपाण्याहुः अर्थात् शब्दादीनि विषयानि भोगरूपत्वात् ज्ञानेन्द्रियेभ्यो मनः परं श्रेष्ठमाहुः तदिन्द्रियाणां प्रेरकत्वात् मनसो बुद्धिः परा श्रेष्ठा विषयभोगविचार्यकत्वात् तद्बुद्धेः परं श्रेष्ठं जीवात्मानमाहुः तद्रष्टारूपत्वात् तस्मिन्नात्मनि आत्मना संस्तभ्य अर्थात् अहमात्मा इति भावनायुक्तो भूत्वा कामरूपं शत्रुं जहि विजयं कुरु नाम त्यजस्व इत्यर्थः ॥ ४३ ॥

इति श्रीभगवद्गीतायां श्रीपुरुषोत्तमदासकृतटीकायां तृतीयोऽध्यायः ॥ ३ ॥

---

उक्तज्ञानस्य साधनरूपपरम्परारूपाचार्यमाह—

श्रीभगवानुवाच ।

॥ श्लोकः ॥

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परंतप ॥ २ ॥
स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

॥ टीका ॥

इमं विवस्वते इति उक्तप्रयोगस्य प्रथमाचार्यः श्रीकृष्णः ततो द्वितीयविवस्वान् तृतीयो वैवस्वतः चतुर्थः इक्ष्वाकुः एवं परम्परेति परम्परा महता इह महत्वचेष्टितः सन् योगो नष्टो भवति अर्थात् इह गीताशास्त्रे श्रीकृष्णस्य भक्तिलक्षणं प्रधानं तर्हि सर्वधर्मान्परित्यज्य मामेकं शरणं व्रजेति तत्र ज्ञानरूपमहत्वचेष्टितः सन् योगो नष्टो भवति तद्ज्ञानं यथाह सिद्धान्तविन्दुवेदान्ते अपि व्यापकश्च तत्वप्रयोगात् स्वतः सिद्धभावादनन्याश्रयत्वात्, जगत्तुच्छमेतं समस्तं तदन्यं, तदेकोऽवशिष्टः शिवः केवलोहम् ॥ १ ॥ उक्तप्रकारेण साक्षात्कारक्षेत्रज्ञरूपजीवात्मनः लक्षणं घटतः पुनश्च यदाह कार्यउपाधिरयं जीवकारणउपाधिरीश्वरः, कार्यकारणतं हित्वा पूर्णबोधोऽवशिष्यते ॥१॥ इति विभागद्वारा आत्महननलक्षणं भवेत् तत्र विभागत्यागरूपेण अनीश्वरलक्षणं भवेत् पुनश्च यदाह श्लोकार्द्धे प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः । जगन्मिथ्या ब्रह्म सत्य जीवब्रह्मैव नापरं ॥ १ ॥ उक्तप्रकारसमस्तमहत्वं बुद्धिद्वारा संभवेत् सा बुद्धिः कालव्यतिक्रमेण अव्यक्तरूपा भवति, अतएवाह भक्तिं विना

ज्ञानमहत्वं कालेन नष्टं भवति तस्मात् श्रीकृष्ण आह स एवायमिति मुक्तानामपि लोकानां आश्रेयः परमेश्वरः भागवते वर्णितं । अत्र सर्गो विसर्गश्च स्थानं पोषण-मूत्तयः । मन्वन्तरेशानु कथा निरोधो मुक्तिराश्रयः॥१॥ दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् । वर्णयन्ति महात्मानः श्रुतेनार्थेन चांजसा ॥ २ ॥

आश्रयरूपकैवल्यस्वरूप अज्ञातमतेनार्जुन आह—

अपरमिति—

॥ श्लोकः ॥

अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥४॥

॥ टीका ॥

सुगमार्थः ॥ ४ ॥

तदुत्तरद्वारा भगवान्निजकैवल्यरूपमाह—

श्रीभगवानुवाच ।

॥ श्लोकः ॥

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥
अजोपि सन्नव्ययात्मा भूतानामीश्वरोपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥६॥

॥ टीका ॥

अर्थात् नरनामजीवात्मसङ्गात् यथा सिंहरूपो भगवान् प्रकटीभूतः तद्वत् तव सङ्गान्मे जन्मानि बहूनि भवन्ति तानि वेदाहं, त्वं न वेद ॥५॥ तत्कारणमाह—अज इति—अर्थात् यथा त्वं मम सङ्गात् अनन्यरूपो वर्त्तते तथा त्रिकालज्ञा मम प्रकृत्तिरपि ममसङ्गात् वर्त्तते तस्मात् अजोपि अव्ययात्मापि तत्प्रकृतिं नियंतृत्वमतेन जन्मादिधारणं करोमि किन्तु यद्यपि देवमनुष्यतिर्यक्रूपमहं न तद्यपि निजमायाद्वारा तद्रूपमेव दर्शयामि यथा त्रिकालज्ञा मम प्रकृतिः तथा त्वमपि मम प्रकृतिः यथा पुरुषाङ्गे पञ्चज्ञानेन्द्रियाणि अन्यस्यान्य विषय न ज्ञायते तथा त्वमपि त्रिकालज्ञया प्रकृत्या गतिर्न जानासि प्रमाणमत्र देहोस्ववैख्यामनवो भूतमात्रानात्मानमन्यस्यविदुः परं यत् सर्वं पुमान्वेद गुणाश्चतज्ञो न वेद सर्वज्ञमनन्तमीडे इत्यर्थः ॥

तज्जन्मनः कारणमाह—यदेति—

॥ श्लोकः ॥

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥७॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥

॥ टीका ॥

अर्थात् यदा परमभागवतधर्मस्य ग्लानिर्भवति तद्धर्मयुक्तसाधूनां परित्राणाय तद्धर्मबाधकाऽनीश्वर-वादीनामसुराणां विनाशाय तदा युगे युगे आत्मान-महं सृजामि इत्यर्थः। तदसुराणां प्रमाणं षोडशाध्याये असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरं अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ८ ॥

भागवद्धर्मं अजामिलोपाख्याने धर्मस्य साक्षाद्भ-गवत्प्रमाणेन न वै विदुरीशयो नापि देवाः न सिद्धमु-ख्या नासुरा मनुष्या कुतश्च विद्याधरचारणादयः—
तद्भगवज्जन्मादि निरूप्यते । जन्मेति—

॥ श्लोकः ॥

जन्मकर्म च मे दिव्यमेवं यो वेत्ति तत्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥

॥ टीका ॥

अर्थात् त्रिकालज्ज्ञान तथा जीवात्मन्सज्ञान्मदीय-यज्जन्मकर्मादि वर्णितं तदेव तत्वविचारद्वारा यो ज्ञायते सैव जन्ममरणादि संस्थितिं तीर्त्वा मामेव प्राप्यते अ-

र्थात् इह जगदपि समस्तक्षेत्रज्ञात्मकत्वात् तद्यप्या-
यावत्संजायते किंचित्सत्वं स्थावरजङ्गमं क्षेत्रक्षेत्रज्ञ
संयोगात्तद्विद्धि भरतर्षभ इत्यर्थः ॥ ६ ॥

तदेव प्रमाणद्वारा आह—वीतरागेति—

॥ श्लोकः ॥

वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
वहवो ज्ञानतपसा पूता मद्भावमागताः ॥१०॥

॥ टीका ॥

मन्मया ज्ञानतपसा वहवः पुरुषाः पूता नाम प-
वित्राः सन्तः मद्भावं प्राप्ताः तत्पवित्रलक्षणमाह—वी-
तरागभयक्रोधा इति अर्थात् उक्तप्रकारकैवल्यज्ञानं
भेदरहितत्वात् आह वीतरागभयक्रोधा इति पवित्र-
लक्षणम् ॥ १० ॥

तत्र भगवन्निजभिन्नरूपावताराणामेकमेव कारणम्
आह—य इति—

॥ श्लोकः ॥

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्वशः ॥११॥

॥ टीका ॥

तत्प्रमाणमाह—

ये ये हताश्चक्रधरेण दैत्याः,
त्रैलोक्यनाथेन जनार्दनेन ।
ते ते गता विष्णुपुरीं नरेन्द्राः,
क्रोधोपि देवस्य वरेण तुल्यम् ॥ १ ॥

यद्वा ये यथा नाम निर्गुणसगुणभेदमतेन ये ये पुरुषा मां यजन्ति तद्यनीय सरूपमहमेव अर्थात् निज प्रकृत्या रूपागुणा निजस्थाने लीनकृते सति निर्गुणस्वरूपं भवामि व्यक्तकृते सगुणं भवामि एतदेव कैवल्यलक्षणं ज्ञेयम् ॥ ११ ॥

इदानीमन्यदेवानामाराधनं प्रति आह—कांक्षत इति—

॥ श्लोकः ॥

कांक्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा॥१२॥

॥ टीका ॥

अर्थात् श्रीभगवद्भक्तिनिष्कामरूपा तत्र कर्मजा नाम फलप्राप्तिहेतु ये ये जना यान्देवान्यजन्ति तेषामपि मनुष्यलोके अहमेव जन्मदाता भवामि यस्मात् जन्मनः कर्मफलं क्षिप्रमेव सिद्धिर्भवति ॥१२॥

तदेवाह—चातुर्वर्ण्यमिति—

॥ श्लोकः ॥

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम् ॥१३॥
न मां कर्माणि लिप्यन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बाध्यते॥१४॥

॥ टीका ॥

अर्थात् सत्वादिगुणविभागयद्ब्राह्मणादि चातुर्वर्ण्यं मया सृष्टं तत्रापि अहं कर्तृत्वभावाहङ्काररहितं तदपि तत्फले स्पृहापि मम नास्ति तदेव द्वितीयाध्याये आह, विहाय कामानि इत्यर्थः अर्थाद्भगवत्कर्तृत्वभावरहित्वात् तद्भक्तजनोपि निष्कामो निरभिमानी भगवदर्चनादि कर्म करोति तत्कर्मोपि तदाधीनमतेन मन्यते ॥ १४ ॥

तदेवाह—एवमिति—

॥ श्लोकः ॥

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥१५॥

॥ टीका ॥

एवं नाम पूर्वोक्तमतं मुमुक्षुजनाः कर्माणि कुर्वन्ति

अतएव त्वमपि पूर्वजनानामनुसारेण कर्माणि कुरु इत्यर्थः ॥ १५ ॥

इदानीं तत्कर्म्मणां शुद्धाशुद्धव्यवस्थां वदति ।

किमिति—

॥ श्लोकः ॥

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥
कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥१७॥
कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥१८॥

॥ टीका ॥

अर्थात् किं कर्म किं अकर्म इति विचारे कवयोपि मोहिता भवन्ति तत्कर्म तुभ्यमहं प्रवक्ष्यामि यत्कर्म ज्ञात्वा अशुभान्मोक्ष्यसेऽर्जुन ॥ १६ ॥ कर्मणः नाम वेदविधियुक्तस्य विकर्मणः नाम वेदविधिरहितकर्म-युक्तस्य केवलशब्दादिविषयभोगार्थे यत्कर्म करोति तदेव विकर्म अकर्मणः नाम यद्धर्मादिचतुष्टयफल-हेतु कर्माणि न करोति तदेवाकर्म अर्थात् बन्धवा-सना कर्मरहितत्वात् ॥ १७ ॥ अर्थात् फलरहित यत्क-

र्माणि करोति कृष्णप्रीत्यर्थं करोति तदेव अकर्मबन्धन-
रहितत्वादकर्माणि वदन्ति तथा यत्संन्यासार्थं देह-
कृत्कर्माणि त्यजन्ति तदेव कर्मरूपाणि वदन्ति अ-
र्थाद्देहप्रसङ्गभावनायुक्तत्वात् अतएवाह सैव कृत्स्नक-
र्माणि बुद्धिमान् अतएव हे अर्जुन राज्यादिभोगवा-
सना त्यक्त्वा कर्म कुरु इत्यर्थः ॥ १८ ॥

तदेवाह—यस्येति—

॥ श्लोकः ॥

यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥१९॥

॥ टीका ॥

यस्य कर्मणः समारम्भाः कामनादि सङ्कल्परहिताः
अतएव विचाररूपज्ञानाग्निः कर्माणि दहति तं प-
ण्डितं बुधा आहुः इत्यर्थः ॥ १९ ॥

तदेवाह—त्यक्त्वेति—

॥ श्लोकः ॥

त्यक्त्वा कर्मफलासंगं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोपि नैव किंचित्करोति सः ॥२०॥
निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्विषम् ॥२१॥

यदृच्छालाभसन्तुष्टो द्वंद्वातीतो विमत्सरः ।
समःसिद्धावसिद्धौ च कृत्वापि न निबध्यते॥२२॥
गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥

॥ टीका ॥

निराश्रयोपि नाम देहाश्रयरहितोपि साश्रयरूपेण नित्यतृप्तिर्भवति तदेव कर्मफलसंगं त्यक्त्वा सैव पुरुषः कर्मप्रवृतिः सत् कर्मबन्धनरूपं न भवति ॥२०॥ निराशी नाम आशिषाशारहितः यतयुक्तात्मा लाभादि भावनारहितः सन् केवलशरीरनिर्वाहार्थे यत्कर्म करोति सैव किल्विषं पापं न प्राप्नोति ॥ २१ ॥ दैवयोगेन यल्लाभो भवति तस्मिन्नेव सन्तुष्टः तत्र सुखदुःखादिभोगविषये यद्धर्षविषादभावरहितः सन् अन्यस्य सुखं दृष्ट्वा मत्सरं न करोति तथा कर्मणि विषये लाभालाभौ समौ कृत्वापि कर्मणि न निबध्यते ॥२२॥ उक्तप्रकारेण ज्ञानद्वारेण कर्मफलसंगरहितः सन् विष्णुप्रीत्यर्थे कर्माणि करोति स पुरुषः अग्रेऽपि एव प्रविलीयते नाम अपि लीनो भवति इत्यर्थः ॥ २३ ॥

इदानीं अशेषप्रकाररूपयज्ञं दर्शयति। ब्रह्मार्पणमिति—

॥ श्लोकः ॥

ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥२४॥

॥ टीका ॥

ब्रह्मार्पणं नाम श्रुवः तत् द्वारा यदाहुतिं ददाति तदेव ब्रह्मरूपं मन्यते यद्धविर्घृतरूपः आहुतिं करोति तदेव ब्रह्मरूपं मन्यते यदग्नौ आहुतिं ददाति सैवाग्निर्ब्रह्मरूपं मन्यते यन्मत्रद्वाराहुतिं करोति तदेव ब्रह्मरूपं मन्यते स एव ब्रह्मलोकं प्राप्नोति अग्निहोत्रब्राह्मणानां समाधिकर्माणि नाम अचलकर्माणिविधिः इत्यर्थः ॥ २४ ॥

इदानीं कर्मयोगीनां लक्षणं वदति । दैवमिति—

॥ श्लोकः ॥

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञनैवोपजुह्वति ॥ २५ ॥

॥ टीका ॥

अपरे अन्ये कर्मनिष्टा योगिनः यदिन्द्रवरुणरुद्रादि नाम मन्त्रद्वाराहुतिं कुर्वन्ति तदेव दैवरूपं यज्ञं, अपरे ब्रह्मरूपवेदतत्स्वाध्यायरूपो यदाग्निः तत् द्वारा भवत यजनं करोति इत्यर्थः ॥ २५ ॥

इदानीं संन्यासलक्षणं यज्ञकर्म वदति—

॥ श्लोकः ॥

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥२६॥

॥ टीका ॥

अन्ये श्रोत्रादिज्ञानेन्द्रियाणां यच्छब्दादि विषयभोगरूपकर्माणि तदेव भगवद्गुणानुवादश्रवणमननतल्लिङ्गदर्शनस्पर्शनतन्नैवेद्यादिप्रसादस्वादरूपं यद्यज्ञं तदेव फलादिरहित संयमाग्निषु जुह्वति अन्ये तच्छब्दादिविषयानि श्रोत्रादिज्ञानेन्द्रियाग्नौ जुह्वति अर्थात् स्वयं अकर्त्ताऽभोक्तारूप मन्यते इत्यर्थः ॥२६॥

तदेव विशेषेण दर्शयति । सर्वाणीति—

॥ श्लोकः ॥

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥२७॥

॥ टीका ॥

अन्ये कर्तृत्वभोक्तृत्वयत्कर्माणि तथा प्राणानां यदाहाररूपकर्माणि तदेव आत्मसंयम नाम अहमकर्त्ताऽभोक्ता एतदात्मसंयमाग्नौ जुह्वति इत्यर्थः ॥२७॥

इदानीं पूर्वोक्तयज्ञानि समुच्चयरूपेण दर्शयति ।

द्रव्येति—

॥ श्लोकः ॥

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः॥२८॥

॥ टीका ॥

द्रव्ययज्ञनाम यत्पूर्वोक्तहविषादीनि ब्रह्माग्नौ जुह्वति इत्यादि पूर्वोक्तयज्ञादिविचारणीयं सम्यक् पूर्वोक्तव्रताः प्रसंशिताः इत्यर्थः ॥ २८ ॥

इदानीं अभ्यासयोगं वदति । अपान इति—

॥ श्लोकः ॥

अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ।
प्राणापानगतीरुद्ध्वा प्राणायामपरायणाः ॥२९॥

॥ टीका ॥

अर्थात् प्राणायामं द्विविधं प्रोक्तं सगर्भनिर्गर्भरूपं तत्र निर्गर्भमन्त्ररहितं केवलं प्राणानि स्ववशक्तद्रूपं तत्र सगर्भं मन्त्ररहितं यत्पूरकरेचक कुम्भकादीनि करोति तत्र यत् श्रीगुरुदेवप्रसादेन यद्बीजाक्षरसहितं अष्टाक्षरादि यन्मन्त्रप्राप्तं तद्बीजाक्षरसहितं अथवा सर्ववेदानां बीजरूपं ओङ्कारशब्दं तद्द्वारा प्राणानि पूरकरेचककुम्भकानि कुर्वन्ति तदेव ईड़ापिङ्गला सु-

षमनानाम्ना नासिका उत्तरदक्षिणमध्यछिद्ररूपं तत्र षोडशबीजमन्त्रजपनद्वारा प्राणानि आकर्षणरूपपूरकं कर्त्तव्यं तदेव अपानस्थाने जुह्वति पुनरन्यनासिकाद्वारा पूरकमन्त्ररूपाद्विगुणं जपित्वा रेचकं कर्त्तव्यं तत्रैव अपानं प्राणस्थाने योतितव्यं मध्ये कुम्भकसमये प्राणापानौ साम्यरूप नाभिस्थाने धारणं कर्त्तव्यं तत्रैव उक्तबीजमन्त्रपूरकस्य चतुर्गुणं मन्त्रं जपनीयं किन्तु यन्नासारन्ध्रेन पूरकं कृत्वा यन्नासारन्ध्रेन रेचक कर्त्तव्यं पुनस्तद्वारा एव पूरकं कृत्वा पूर्वरूपपूरकद्वारा रेचकं कर्त्तव्यं तत्र पूरकसमये मन्त्रजपनस्य द्विगुणं रेचकं कर्त्तव्यं चतुर्गुणजपनद्वारा कुम्भकं कर्त्तव्यं तत्रैव इड़ापिङ्गलानाडीसुषमनास्थाने नियोजितव्या एतदेव प्राणायामपरायणानां साधनरूपयज्ञं कथितं इत्यर्थः ॥ २६ ॥

इदानीं आहाररूपयज्ञं वदति । अपर इति—

॥ श्लोकः ॥

अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥३०॥

॥ टीका ॥

अर्थात् अहारयज्ञोपि मन्त्रद्वारा कर्त्तव्यः ॐ प्रा-

णाय स्वाहा अपानाय स्वाहा समानाय स्वाहा उदानाय स्वाहा व्यानाय स्वाहा, तत्र व्यानद्वारा मुखेन्द्रिय-स्थाने ग्रासं गृहीत्वा पश्चात् कण्ठस्थाने उदानेन गृ-हीत्वा पश्चात् हृदये प्राणवायुद्वारा नाभिस्थाने स-मानेनाहुतिः कर्त्तव्या, तस्मादाह प्राणान्प्राणेषु जुह्वति पश्चात् यथाग्निकुण्डं संस्कारं करोति तथाऽपानद्वारा नाभिस्थानं शुद्धं कर्त्तव्यं एतदेवार्थें निमन्त्रनद्वारा ब्राह्मणं भोजयेत् नान्यवर्णेभ्यः अर्थात्सैव वलपुष्टार्थे भोजनकरणात् पूर्वोक्तयज्ञद्वाराऽन्यदुत्पत्तिकिल्विषं न-श्यति इत्यर्थः ॥ ३० ॥

तदेवाह—यज्ञशिष्टेति—

॥ श्लोकः ॥

यज्ञशिष्टामृतभुजो यान्ति ब्रह्मसनातनम् ।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥

॥ टीका ॥

पूर्वोक्तयज्ञावशिष्टं अमृतरूपान्नं भक्षयित्वा सना-तनं ब्रह्मान्तर्यामिरूपस्थानं प्राप्यते अज्ञस्य अ-स्मिन्मनुष्यलोकेपि सुखं नास्ति तत्र तत्कर्मोपार्जित-स्वर्गलोकादिस्थाने कुतः सुखं नास्तीत्यर्थः ॥ ३१ ॥

इदानीमुक्तसमस्तयज्ञानां फलमाह—एवमिति—

॥ श्लोकः ॥

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे॥३२॥

॥ टीका ॥

एवं बहुधा यज्ञाः वेदमुखेन विस्तारिताः तान्सर्वान् कर्म्मजनितान् ज्ञात्वा निष्कामरूपेण कर्म्म कुर्वन् सन् कर्मबन्धाद्विमोक्ष्यसे इत्यर्थः ॥ ३२ ॥

इदानीमुक्तरूपकर्म आह—श्रेयानीति—

॥ श्लोकः ॥

श्रेयान्द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परंतप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥३३॥

॥ टीका ॥

द्रव्यमय नाम यत्पूर्वोक्तब्रह्मार्पणं ब्रह्महविरित्यादि तथा यदाहारयज्ञादिः तत्पूर्वोक्तसमस्तात् ज्ञानयज्ञः श्रेयान् तत्राह ज्ञानप्राप्ते सति सर्वाणि कर्माणि अ-खिलं भवन्ति अर्थात् तत्कर्मवासना नश्यन्ति इत्यर्थः ॥

तदेव आह—तदिति—

॥ श्लोकः ॥

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥३४

॥ टीका ॥

अर्थात् ज्ञानिनः स्थाने प्रथमं प्रणिपातं कर्त्तव्यं तदनन्तरं तच्चित्तं ज्ञात्वा सेवनं कर्त्तव्यं, पश्चात् प्रश्नं कर्त्तव्यं तर्हि ज्ञानी ज्ञानस्योपदेशं करोति इत्यर्थः ॥३४॥

तत् ज्ञानमाह—यदिति—

॥ श्लोकः ॥

यत् ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥३५॥

॥ टीका ॥

यत् ज्ञानं ज्ञात्वा पुनर्मोहं न यास्यसि येन ज्ञानेन सर्वाणि भूतानि स्थाने देही देहभेदरूपेण आत्मनि नाम आत्मतत्वं दर्शयति तथा अभेदनाम अद्वैतरूपेण परमात्मा परमेश्वररूपं पश्यति इत्यर्थः ॥ ३५ ॥

तन्माहात्म्यम् आह—अपीति—

॥ श्लोकः ॥

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥३६॥

॥ टीका ॥

अर्थात् परमेश्वरदर्शनात् पूर्वकृतसमस्तपापमेव नश्यति ॥ ३६ ॥

तदेव दृष्टान्तेन दर्शयति । यथेति—

॥ श्लोकः ॥

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥३७॥

। टीका ॥

यथाग्निदग्धाःसमिधः पुनर्न प्राप्यन्ते तथा ज्ञानीनां हृदये द्वैतरूपमज्ञानं न उत्पद्यते इत्यर्थः ॥३७॥

तदेव पुनर्दर्शयति । नहीति—

॥ श्लोकः ॥

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥३८॥

॥ टीका ॥

ज्ञानसदृशं पवित्रं तीर्थादिस्नानं न विद्यते तत्कारणमाह—प्रथमं आत्मनि विन्दति पश्चात्स्वयं स्वतन्त्ररूपं परमेश्वरमेव विन्दति तीर्थे स्नानान्तरे पुनरपि पापबुद्धरुत्पत्तिर्भवति किन्तु आत्मतत्ववेत्तानां पुनः कैवल्यरूपं परमेश्वरमेव विन्दति अतएव तीर्थाधिकं ज्ञानं इत्यभिप्रायः ॥ ३८ ॥

तत्साधनमाह—श्रद्धावानिति—

॥ श्लोकः ॥

श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥

॥ टीका ॥

अर्थात् सद्गुरुवाक्ये विश्वासरूपमेव श्रद्धा सैव श्रद्धावान् ज्ञानं लभते ज्ञाने प्राप्ते सति शान्ति प्राप्नोति अर्थात् कामवासना नश्यति इत्यर्थः ॥ ३९ ॥

इदानीमज्ञानस्य फलमाह—

॥ श्लोकः ॥

अज्ञश्चाश्रद्दधानश्च संयतात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः॥४०॥

॥ टीका ॥

अश्रद्धधानस्य अज्ञस्य अशान्तस्य इह लोकेपि परलोकेपि सुखं नास्तीत्यर्थः ॥ ४० ॥

इदानीं ज्ञानिनः फलमाह—

॥ श्लोकः ॥

योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥४१॥

॥ टीका ॥

आत्मवन्तं निष्ठात्मकं पुरुषं कर्माणि न निबध्नन्ति

अर्थात् फलरहितकृष्णार्पणं कर्म कुर्वति सति तथा आत्मतत्वपरमात्मतत्व अभेदरूपेण ज्ञाते सति संशयं न प्राप्नोति ॥ ४१ ॥

तदेवाह—तस्मादिति—

॥ श्लोकः ॥

तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः ।
छित्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥४२॥

॥ टीका ॥

ज्ञानेन परमेश्वरप्राप्तिहेतु संशयं छित्वा निष्कामरूपेण यदृच्छयैव प्राप्ते युद्धकर्मरूपयोगे उत्तिष्ठ विलंबं मा कुरु इत्यर्थः ॥ ४२ ॥

इति श्रीगीतायां श्रीपुरुषोत्तमदासकृतटीकायां
चतुर्थोऽध्यायः ॥ ४ ॥

अथ पञ्चमाध्यायः ।

यत्पूर्वाध्याये कैवल्यरूपपरमेश्वरस्तथा क्षेत्राक्षेत्रज्ञविभागरूपेण जीवात्मा एतत्परिछन्नरूपसम्बन्धस्तदेव ज्ञानासिना छित्वा योगमार्गे स्थितो भव इत्येवं श्रुत्वा अर्जुन आह—संन्यासमिति—

॥ श्लोकः ॥

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥१॥

॥ टीका ॥

अर्थात् जीवेश्वरयोरैक्यभावद्वारा संन्यासलक्षणं तथा कर्मेन्द्रियानिद्वारा कर्मयोगलक्षणं तयोरैक्यमसंभवात् यत्कीर्त्यां मदीयश्रेयो भवति तन्मह्यं कथम् इत्यर्थः ॥ १ ॥

तदुत्तरमाह—श्रीभगवानुवाच ।

॥ श्लोकः ॥

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥२॥

॥ टीका ॥

संन्यासकर्मयोगौ उभौ निःश्रेयसकरौ तत्रापि कर्मत्यागात्कर्मकर्त्तव्य इति विशेषः ॥ २ ॥

तदेवाह—

॥ श्लोकः ॥

ज्ञेयः सनित्यसंन्यासी यो न द्वेष्टि न कांक्षति ।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥३॥

॥ टीका ॥

तदेव संन्यासलक्षणं ज्ञेयं यः पुरुषः दुःखभोगे द्वेषं न करोति सुखभोगेपि स्पृहां न करोति स एव सुखभोगरूपवासनाबन्धात् विमुच्यते ॥ ३ ॥

उक्तप्रकारेण सुखरूपवासना बन्धात् विमुक्तं कृत्वा इदानीं योगसंन्यासयोः लक्षणं वदति । सांख्य-योगाविति—

॥ श्लोकः ॥

सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥४॥

॥ टीका ॥

बालाः नाम अविवेकाः सांख्ययोगस्य विलक्षणं मन्यन्ते किन्तु पण्डिता न, सांख्ययोगयोः फलं एक-मेव स्थितं विन्दते इत्यर्थः ॥ ४ ॥

तदेवाह—यदिति—

॥ श्लोकः ॥

यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं सांख्यं च योगं च यः पश्यति स पश्यति॥५॥

॥ टीका ॥

निर्गुणरूपजीवात्मा सद्ज्ञात्सांख्यं नाम संन्यासं

साधयति तथा त्रिकालज्ञज्ञानयुक्तभगवदाराधना-रूपयोगं साधयति तत्र त्रिकालज्ञज्ञानं च जीवात्मानं च उभयोः नियन्ता श्रीपरमेश्वरः अस्मिन् गीता-शास्त्रे कथितः तद्यथा बहूनि मे व्यतीतानीति तथा चतुर्दशाध्याये यदाह—सर्वयोनिषु कौन्तेय मूर्त्तयः संभवन्ति याः। तासां ब्रह्म महद्योनिरहं वीजप्रदः पिता॥ अतएव त्रिकालज्ञज्ञानसङ्गात् श्रीभगवान् परमानन्द-स्वरूप सदाख्यानं लभते तथा जीवात्मा सङ्गात् चि-दाख्यानं लभते अतएव आह यदानन्दस्वरूपं सां-ख्येन प्राप्यते तदानन्दस्वरूपं योगेन प्राप्यते अत-एव सौख्ययोगस्यैकमेवानन्दस्थानं लभ्यते एतद्वालाः अज्ञानिनः पृथक् मन्यन्ते पण्डिता न इत्यर्थः ॥५॥

तत्र किंचिद्विशेषमेव वदति—

॥ श्लोकः ॥

संन्यासस्तु महाबाहो दुःखमाप्नुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ॥ ६ ॥
योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥७॥

॥ टीका ॥

अयोगतः नाम भगवदाराधनाव्यतिरिक्त संन्या-

सेन दुःखमाप्नोति भगवदाराधनायुक्तः पुरुषः अचिरेण ब्रह्मपदमधिगच्छति अर्थात् भगवद्ध्यानयुक्तः चित्तः अचलरूपेण वर्तितत्वात् ॥ ६ ॥ आह—अर्थात् मनसि कामनारहित विशुद्धरूपेण वर्तितत्वादाह—विजितात्मा जितेन्द्रियः सर्वभूतात्मारूप आत्मानं पश्यतः सन् मनसि स्थितिं कृतं इत्यर्थः उक्तयोगरहित संन्यासेन दुःखमिति ॥ ७ ॥

इदानीं साधारणरूप संन्यासमाह—नैवेति—

॥ श्लोकः ॥

नैव किंचित्करोमीति युक्तो मन्येत तत्ववित् ।
पश्यन्शृण्वन्स्पृशन्जिघ्रन्नश्नन्गच्छन्स्वपन्श्वसन् ॥
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्त्तन्ते इति धारयन् ॥९॥

॥ टीका ॥

इन्द्रियार्थेषु इन्द्रियाणि वर्त्तन्ते अहं तत् ज्ञानास्वरूपत्वात् किञ्चिदपि न करोमि सदताह पश्यन्निति चक्षुःकर्म श्रोत्रकर्म त्वक्कर्म नासिकाकर्म जिह्वाकर्म पादकर्म मनःकर्म प्राणकर्म मुखकर्म गुदाकर्म हस्तकर्म पलककर्म एवं धारणायुक्तः सन् अकर्त्तारूपेण वर्त्तितोस्मि इत्यर्थः ॥ ८ ॥ ९ ॥

इदानीं भगवति प्रेमयुक्तेन्द्रियाणधारण सङ्कल्पद्वारा भक्तिं वदति । ब्रह्मणीति—

॥ श्लोकः ॥

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेभ्यो पद्मपत्रमिवाम्भसा ॥ १० ॥
कायेन मनसाबुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्म शुद्धते ॥ ११ ॥
युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीं ।
अयुक्तः कामकारेण फलेयुक्तोपि मन्यते ॥ १२ ॥

॥ टीका ॥

कृष्णार्पणकर्माणि तदेव सङ्गं त्यक्त्वा नाम फलाशान्तिकामः पुरुषः करोति सैव पत्रपुष्पफलादि आहरणेन यत्पापं तेन पापेन न लिप्यते जलेपद्मपत्रमिव अर्थात् कायेन मनसा बुद्ध्या इन्द्रियैरपि आत्मशुद्धार्थे अन्तरूपणशुद्धार्थे योगिनः कर्म कुर्वन्ति ॥ ११ ॥ युक्तः शुद्धविचारवान् कर्माणां फलं त्यक्त्वा कुर्वन्सन् शान्तिमाप्नोति नाम कर्माशारहितो भवति तत्र फलाशासहित अयुक्तः पुरुषः कर्म कुर्वन्सन् सैवफलाशायुक्त भुत्वा लोकलोकान्तरे भ्रमणं करोति इत्यर्थः ॥ १२ ॥

इदानीं परमेश्वररूपेण संयुक्त संन्यासं वदति । सर्वेति—

॥ श्लोकः ॥

सर्वकर्माणि मनसा संन्यस्यास्ते सुखं यशी ।
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥
न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्त्तते ॥१४॥

॥ टीका ॥

अर्थात् देही जीवात्मा इह नवद्वारयुक्ते पुरे वसन्सन् तद्द्वारयुक्तेन्द्रियादिसङ्गात् नैव किञ्चित्करोति तदेन्द्रियद्वारा न कारयति तत्कारणमाह—मनसा संन्यस्यास्ते अर्थात् मनस्कामना परमेश्वरेऽर्पितत्वात् ॥ तदेवाह विभुः कैवल्यरूपेण सर्वत्र व्यापकः सन् जीवात्मनि कर्तृत्वं न ददाति वा तद्द्वारा न कारयति न तत्कर्मफलेपि वासनां जनयति अतएव केवल मन इन्द्रियाणि निजनिजस्वभावेन वर्त्तन्ते इत्यर्थः ॥१४॥

तद्विशेषेनाह—नेति—

॥ श्लोकः ॥

नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः॥१५॥

॥ टीका ॥

समस्तजीवेषु विभुः परमेश्वरः न पापे नियुक्तं क-

रोति न पुण्ये नियुक्तं करोति तदेवाह अज्ञानेन अर्थात् अहं त्वं मदीयं त्वदीयं इति अज्ञानेन आवृतं नाम पृथक्भावं प्राप्तः सन् मित्रशत्रुभावेन पाप अस्मानि वदति अर्थात् शत्रौ पापव्याख्यां करोति मित्रे पुण्यव्याख्यां करोति ॥ १५ ॥

ज्ञानं कारणहेतुमाह—ज्ञानेनेति—

॥ श्लोकः ॥

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवत् ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥

॥ टीका ॥

अर्थात् भेदज्ञानं जन्ममरणादिसङ्गात् कथ्यते तज्जन्म एव यः पुरुषः जाग्रतरूपं मन्यते पूर्वाभ्यासप्राप्तत्वात् तथा मृत्युवस्यं सुषुप्तिकं ज्ञानं पूर्वजन्मअज्ञातरूपत्वात् तथा वर्तमानसमये यदहं त्वं तव मम इत्यादि मानात्मज्ञानं स्वप्नवज्ज्ञात्वा परमेश्वरस्य मायानुभवं करोति तदेवादित्यवत् ज्ञानं कथ्यते अत एव तत्परं नाम भगवत्परायणं भवति इत्यर्थः ॥ १६ ॥

तत्फलमाह—

॥ श्लोकः ॥

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥

॥ टीका ॥

तद्बुद्धयः नाम तद्भगवत्तत्वं विचारयति तद्यथा चतुर्थाध्यायेन कथितं । चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः । तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम् ॥ न मां कर्माणि लिम्पन्ति न मे कर्मफलस्पृहा—इति प्रमाणद्वारेण परमानन्दस्वरूपे परमेश्वरे अहमादि भावं न लभते तथा सकामभावं न लभते उक्तविचारपूर्वकस्तदात्मानः नाम तदाश्रयेन यो जीवति तत्कारणमाह तदेव निष्ठां करोति तदाधीनं भावं धारयति तत्फलमाह जन्ममरणादिरहितं भवतीत्यर्थः ॥

तत् ज्ञानं वदति । विद्या इति—

॥ श्लोकः ॥

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव स्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥

॥ टीका ॥

सर्वत्र साम्यदर्शनं कर्त्तव्यं तद्यथाह श्रीभागवते सनकादिकं प्रति हंसनारायणेन पञ्चात्मकेषु भूतेषु समानेषु च वस्तुषु को भवानिति वः प्रश्नः वाचारम्भो ह्यनर्थकः ॥ १८ ॥

तत्फलमाह—इहैवेति—

॥ श्लोकः ॥

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः।१९।

॥ टीका ॥

तैः पुरुषैः इहैव इह लोके जन्ममरणादि जितः येषां पुरुषाणां साम्यमते मनः स्थितं ब्रह्म नाम कैवल्यस्वरूपं निर्दोषं नाम भेदरहितं तत्रैव पुरुषाः स्थिताः इत्यर्थः ॥ १६ ॥

तदाचरणमाह—नेति—

॥ श्लोकः ॥

न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम्।
स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥२०॥

॥ टीका ॥

सुगमार्थः ॥ २० ॥

तल्लक्षणमाह—बाह्येति—

॥ श्लोकः ॥

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ॥२१॥

॥ टीका ॥

अर्थात् शब्दस्पर्शरसगन्ध इति भोगरूप पञ्चविषयेषु असक्तात्मा नाम न प्रीतिं करोति किन्तु आ-

त्मनि नाम तत्वविचारद्वारा यत्सुखं तदेव विन्दति स एव ब्रह्मयोगयुक्तः पुरुषः अक्षयं सुखं प्राप्नोति इत्यर्थः ॥ २१ ॥

उक्तविषयेषु सुखेषु दोषं दर्शयति । य इति—

॥ श्लोकः ॥

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥२२॥

॥ टीका ॥

अर्थात् शब्दस्पर्शादिविषयेषु यत्सुखं तदाद्यन्तवान् अतएव बुधस्तेषु न रमते इत्यर्थः ॥ २२ ॥

तत्सुखं प्रसिद्धिहेतुं वदति । शक्नोतीति—

॥ श्लोकः ॥

शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥२३॥

॥ टीका ॥

प्राक्शरीरविमोक्षणात् नाम मृत्युवस्थापर्य्यन्त विषयभोगसुखत्यजने सक्तो भवति नाम तद्भोगहेतुकामक्रोधं नोत्पत्तिः करोति सैव युक्तः पुरुषः सुखी भवति इत्यर्थः ॥ २३ ॥

तत्सुखं भवति वदति । योऽन्त इति—

॥ श्लोकः ॥

योऽन्तः सुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥२४॥

॥ टीका ॥

यः पुरुषः अन्तर्गतसुखनाम परमानन्दस्वरूपः तत्सुखलाभेन विश्रामो नाम अन्य सुखस्य स्पृहां न करोति तथा अन्तर्ज्योतिर्नाम त्रिकालज्ज्ञानरूप-ज्योति अर्थात् स एव परमानन्दस्वरूप सर्वत्र अन्त-र्यामिरूपेण वर्त्तते स योगी निजस्वरूपचैतन्यरूपो भूत्वा कैवल्यस्वरूपसच्चिदानन्दब्रह्मस्वरूपमेव मन्यते इत्यर्थः ॥ २४ ॥

तस्याचरणं वदति । लभन्ते इति—

॥ श्लोकः ॥

लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधायतात्मानः सर्वभूतहिते रताः ॥ २६ ॥

॥ टीका ॥

ऋषयः नाम सदाचारयुक्तब्राह्मणाः यदोक्तप्रका-रेण सच्चिदानन्दस्वरूप कैवल्यब्रह्म लभते तदा भे-दाज्ञानजनानां हिते रतिर्भवति इत्यर्थः ॥ २५ ॥

तल्लक्षणं वदति—

॥ श्लोकः ॥

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्म निर्वाणं वर्त्तते विदितात्मनाम्॥२६॥

॥ टीका ॥

अर्थात् कामक्रोधद्वैतबुद्ध्या वर्त्तति यर्हि उक्तप्रकारेण सच्चिदानन्दस्वरूपेन वर्त्तते तर्हि भेदबुद्धिसर्वत्र रहितः सन् कामक्रोधादि विगतो भवति अतएव इह वर्त्तमानदेहे ब्रह्मनिर्वाणं प्राप्नोति इत्यर्थः ॥ २६ ॥

स्थिरबुद्धेर्लक्षणं वदति । स्पर्शानीति—

॥ श्लोकः ॥

स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥

॥ टीका ॥

अर्थात् उर्धगति-प्राणवायुरधोगतिः अपानवायुः तदेव मनसि वहिर्सङ्कल्पं त्यक्वा उभौ ऊर्धाधौ प्राणौ समानरूपनाभिस्थाने धृत्वा तत्र यत् इड़ापिङ्गला उभे नाडिके कण्ठस्थानात् मुखद्वारा त्यक्त्वा पश्चात्पश्चिमदेशं गृहीत्वा मस्तकस्थाने गत्वा उभौ कर्णौ चक्षूर्नासिकाद्वारा वहिर्निर्गतौ तदुभयोर्मध्ये या चित्ररेखा नाम ब्रह्मनाडी सैव नासिकाग्रभावं प्राप्त्वा पुनरूर्धगामी भूत्वा तद्द्वारा मनासि भ्रुवोर्मध्ये ध्यायेत् अर्थात् अन्तस्करणात् वहिर्सङ्कल्पं तज्येत् ॥ २७ ॥

तत्फलमाह—

॥ श्लोकः ॥

यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः॥२८॥

॥ टीका ॥

वहिर्दृष्टित्यागेन यतेन्द्रियमनो बुद्धिर्भवति स एव मननशिलो मुनिः इच्छाभयादिरहितः सन् जीवन्मुक्तरूपो भवति इत्यर्थः ॥ २८ ॥

तस्य निर्वाधालक्षणं वदति । भोक्तारमिति—

॥ श्लोकः ॥

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥

॥ टीका ॥

अर्थात् श्रीपरमानन्दस्वरूपं भगवन्तं सर्वभूतानां सुहृदं नाम मित्रं तद्यथा पूतनाशिशुपालादिकानिन्दकाविषदायकानां सद्गतिदायकं तथा सर्वयज्ञभोक्तानां नामफलदायकं तथा त्रिकालज्ञज्ञानस्य जीवात्मनः प्रेरकं मां ज्ञात्वा शान्तिं प्राप्नोति वांछारहितो भवति इति ॥ २९ ॥

इतिश्रीभगवद्गीतायां पुरुषोत्तमदासकृतटीकायां पञ्चमोऽध्यायः ॥ ५ ॥

यत्पूर्वोक्तं यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते तत्सांख्यं कथितं अधुना योगं वर्णयामि—

भगवानुवाच ।

॥ श्लोकः ॥

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥१॥

॥ टीका ॥

यत्फलं त्यक्त्वा वेदोक्तकर्माणि करोति तदेव योगं तदेव संन्यासं फलसन्धानयुक्त यन्निरग्निद्वारा पितरदेवादि कर्माणि करोति स एव योगो न भवति यथा सङ्कल्पितनिजगोरूपस्य दुग्धं स्वयं पिबति स एव भ्रष्टो भवति तथा मुमुक्षेछायुक्त संन्यासं करोति स एव संन्यासो न भवति तद्यथाह श्रुतिः मुमुक्षापेक्षा सङ्कल्पबन्ध इत्यर्थः ॥ १ ॥

तदेवाह यमिति—

॥ श्लोकः ॥

यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
न ह्यसंन्यस्तसङ्कल्पो योगी भवति कश्चन ॥२॥

॥ टीका ॥

अर्थात् फलकांक्षां त्यक्त्वा पुरुषाणां योगसंन्यासा-

वुभौ सिद्धी भवतः तत्फलं त्यक्तं विना न संन्यासं न योगं सिद्धिर्भवति इत्यर्थः ॥ २ ॥

तदेवावस्थाभेदेन वर्णयति—

॥ श्लोकः ॥

आरुरुक्षोर्मुनेर्योगं कर्मकारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥

॥ टीका ॥

अर्थात् यावत्पर्यन्तं योगसिद्धिमिच्छा करोति तावत्पर्यन्तं कर्माणि कर्त्तव्यानि स एव यदा योगेनारूढो भवति तस्य शम एव कार्यः अर्थात् कैवल्यतत्त्वविचारणीयं इत्यर्थः ॥ ३ ॥

तदारूढावस्थां वदति । यदेति—

॥ श्लोकः ॥

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते ॥४॥

॥ टीका ॥

इन्द्रियार्थेषु नाम ज्ञानेन्द्रियार्थेषु विषयभोगेषु नानुषज्जते वासनां न करोति तथा कर्मेन्द्रियार्थेषु न वासनां करोति तदा योगारूढो भवति इत्यर्थः ॥४॥

तस्य शमकारणं वदति—

॥ श्लोकः ॥

उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥५॥

॥ टीका ॥

आत्मना नाम इन्द्रियादिद्वारा आत्मानं उद्धारयेत् आत्मानं न विषादयेत् तत्कारणमाह—आत्मन आत्मा एव बन्धुः आत्मन आत्मा एव शत्रुः इत्यर्थः ॥५॥

तदेव दर्शयति । बन्धुरिति—

॥ श्लोकः ॥

बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्त्तेतात्मैव शत्रुवत् ॥ ६ ॥

॥ टीका ॥

अर्थात् येनात्मना आत्मनो मनबुद्ध्यादि साधयेत् तस्यात्मन आत्मा बन्धुरूपेण वर्त्तते अनात्मनः नाम असाधनरूपमनबुद्धयः तस्य आत्मनः शत्रुरूपेण वर्द्धते इत्यर्थः ॥ ६ ॥

जितात्मनः फलमाह—जितात्मन इति—

॥ श्लोकः ॥

जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥७॥

॥ टीका ॥

अर्थात् जितात्मनः पुरुषस्य शान्तिरूपेण अद्वैतामृतपरमात्मा कैवल्यस्वरूपः सम्यगाहितः नाम प्रापितः तल्लक्षणमाह—शीतोष्णादि समस्तद्वन्द्वेषु समवर्त्तते इत्यर्थः ॥ ७ ॥

तदेव विशेषेनाह—

॥ श्लोकः ॥

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥८॥

॥ टीका ॥

ज्ञान नाम बुद्धिशुद्धविचाररूपं विज्ञान नाम श्रुतिशास्त्रप्रमाणरूपं तद्द्वारा इन्द्रियाणि जित्वा तृप्तिनाम वासनारहितो भूत्वा कूटस्थ नाम सर्वंखल्विदं ब्रह्म इति श्रुतिप्रमाणेन लोष्टादि प्रति समबुद्धिं करोति तत्र लोष्टनाम शुष्कमृत्पिण्ड अश्मपाषाणकाञ्चनस्वर्णेषु समबुद्धिः इत्यर्थः ॥ ८ ॥

तदेव विशेषरूपेण आह—सुहृदिति—

॥ श्लोकः ॥

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥९॥

॥ टीका ॥

सुहृदादिसमस्तेषु सर्वत्रैकतत्वदृष्टिद्वारा समबुद्धिर्भवति इत्यर्थ :॥ ६ ॥

तत्कारणमाह—योगीति—

॥ श्लोकः ॥

योगी युंजीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥१०॥

॥ टीका ॥

योगेश्वरो विषयवादिनां सङ्गं सततं त्यक्त्वा एक एव एकान्तस्थाने स्थितः सन् आत्मातत्वे मनसि युंजाति नाम विचारयति निराशी नाम अन्यफलादि आशां त्यक्त्वा तथा दैवयोगेन यद्विषयादि प्राप्तिर्भवति तदपि अङ्गीकारं न करोति आत्मतत्वदर्शने विघातकत्वात् इत्यर्थः ॥ १० ॥

तद्रहस्यमाह—

॥ श्लोकः ॥

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम्॥ १॥

॥ टीका ॥

शुचौदेशे नाम जनरहितैकान्तदेशे तत्रासनार्थे

स्थानं निर्मायेति नाऽति उच्चं नाऽतिनीचं अर्थात् तदासने आरोहणेन न क्लेशो भवति न पादविक्रमेगतिर्भवति तद्वेदिकोपरि प्रथमंकुशा तदुपरि अजिन तदुपरि वस्त्रं इत्यर्थः ॥ ११ ॥

तत्रासनोपरिस्थितस्य कर्त्तव्यमाह—तत्रैति—

॥ श्लोकः ॥

तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युंज्याद्योगमात्मविशुद्धये॥१२॥

॥ टीका ॥

तत्रासने स्थित्वा आत्मतत्वं विना अन्यकल्पनां त्यक्त्वा तद्यत्नमाह—चित्तद्वारा पूर्वापरस्मृतिः स एव त्यक्त्वा तथा इन्द्रियद्वारा यच्छ्रवणं दर्शनादि वासनां त्यक्त्वा आत्मविशुद्धये नाम स्थिरकरणार्थे यत्नं कुर्यात् इत्यर्थः ॥ १२ ॥

तद्यत्नमाह—सममिति—

॥ श्लोकः ॥

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन्॥१३॥

॥ टीका ॥

आत्मातत्वविचारणार्थे मनसि वाह्यदेहे नियमं

करोति अर्थाद्यथा वाह्यासनं अति उच्चनीचं त्यजति तथा वहिःशरीरेपि उच्चनीचगतिं त्यक्त्वा समानरूपेण धारयति तत्र यन्नासिकाग्रं दर्शनमाह—तदेव दर्शनवृत्तिः चक्षुषिपलकानि स्थितिरूपेण आत्मतत्वदर्शनेन नियोजनं करोति न केवलनासिकाग्रं दर्शनसिद्धिं इत्यर्थः ॥ १३ ॥

तत्फलमाह—

॥ श्लोकः ॥

प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥१४॥

॥ टीका ॥

तदात्मतत्वदर्शनं श्रुतिमाह—यस्तु सर्वाणि भूतानि आत्मन्येवावतिष्ठति सर्वभूतेषु च आत्मानं ततो न विचिकिष्यति उक्तप्रकार ऐक्यदर्शनेन प्रशान्तात्मा भवति अर्थात्मनः चञ्चलवृत्तिं त्यजति तथा द्वैतदृष्टि अभावेन विगतभीर्नाम भयरहितो भवति अद्वैतदृष्टिद्वारा कामचेष्टारहितो भवति तस्मादाह—ब्रह्मचारीति उक्तप्रकारेण मनः संयुक्तपुरुषः मदीयकैवल्यस्वरूपपरायणो भवति इत्यर्थः ॥ १४ ॥

तत्फलमाह—

॥ श्लोकः ॥

युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥१५॥

॥ टीका ॥

उक्तप्रकारेण शान्तिवृत्ति संहतमदीय कैवल्यस्वरूपेण स्थितिर्भवति इत्यर्थः ॥ १५ ॥

तस्य पुरुषस्य देहरक्षणं वदति—

॥ श्लोकः ॥

नात्यश्नतस्तु योगोस्ति न चैकान्तमनश्नतः ।
न चाति स्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥१६॥
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥१७॥

॥ टीका ॥

सुगमार्थः ॥ १६ ॥ १७ ॥

उक्तनियमस्य फलमाह—यदेति—

॥ श्लोकः ॥

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥१८॥

॥ टीका ॥

यदा आत्मन्येव नियतचित्तं भवति तदा अशेष-कामना नश्यन्ति इत्यर्थः ॥ १८ ॥

तच्छान्तिलक्षणमाह—

॥ श्लोकः ॥

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः॥१९॥

॥ टीका ॥

यथा वातरहितस्थाने दीपशिखा न चलति तथा योगिनां चित्तं योगेन युञ्जन् सन् न चलति अचलं भवतीत्यर्थः ॥ १९ ॥

तद्विशेषेण दर्शयति—

॥ श्लोकः ॥

यत्रोपरमते चित्तं निरुद्धं योगसेवया।
यत्रचैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥२०॥

॥ टीका ॥

यदा नित्यं प्रति योगसेवया योगसाधनद्वारा चित्तं उपरमते तदुपरामस्थानं वदति यत्र परमात्मास्थाने आत्मानं पश्यति तदात्मा तुष्यति प्रसन्नो भवती-त्यर्थः ॥ २० ॥

तत्प्रसन्नरूपमाह—

॥ श्लोकः ॥

सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्वतः ॥२१॥

॥ टीका ॥

अतीन्द्रियं नाम विषयभोगरहितं यत्सुखं तदेव बुद्धिग्राह्यं अर्थात् तत्वविचारद्वारेण ग्राह्यं आत्यन्तिकं नाम यत्सुखस्याभावो नास्ति तदेव परमेश्वरस्वरूपं, कस्मात् यतः विश्वमुत्पाद्य पुत्रोत्पत्तिवत्सुखं न मन्यते तथा प्रतिपालने श्रमं न मन्यते संहरणं कृत्वा शोकं न मन्यते एतदेव बुद्धिग्राह्यद्वाराऽऽत्यन्तिकं सुखं प्रोक्तं तदुक्तं पंचमाध्याये 'यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते' तत्रैवाह 'सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति' सर्वभूतानां सुहृदं वैरमित्रभावे उभयोः समगतिदायकं अतएवाऽऽत्यन्तिकं सुखं परमानन्दपरमेश्वरस्वरूपमित्युक्तं एवं भूतसुखं परमानन्दस्वरूपं ज्ञात्वा अन्यकामनाद्वारा सुखं न वांछयतीत्यर्थः ॥ २१ ॥

तदेवाह—

॥ श्लोकः ॥

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते। २२।

॥ टीका ॥

अर्थात् कामनाद्वारा प्राप्तिसुखं अधिकं न मन्यते किन्तु कामनासाधनेपि दुःखं तत्साधनद्वारा प्राप्तिः पुनरभावेपि दुःखं भवति परमेश्वरस्वरूपं सुखं न तद्भवतीत्यर्थः ॥ २२ ॥

तद्दर्शयति तमिति—

॥ श्लोकः ॥

तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितं ।
स निश्चयेन योक्तव्यो योगो निर्विण्णचेतसा॥२३॥

॥ टीका ॥

तं योगसंज्ञितं सुखरूपं दुःखसंयोगवियोगं नाम दुःखसंयोगरहितं विद्यात् अत एव स योगः निश्चयेन योक्तव्य नाम कर्तव्यनिर्विण्णचेतसा स्वस्थचेतसा इत्यर्थः ॥ २३ ॥

तत्साधनमाह—

॥ श्लोकः ॥

सङ्कल्पप्रभवान्कामाँस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समंततः ॥२४॥

॥ टीका ॥

मनसङ्कल्पद्वारा अशेषकामान् त्यक्त्वा तत्त्यागं दर्शयति इन्द्रियग्रामं मनसा विनियम्येति ॥ २४ ॥

तदुपायमाह—

॥ श्लोकः ॥

शनैः शनैरुपरमेद् बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥

॥ टीका ॥

धृतिवृतिबुद्धिद्वारा मनसि इन्द्रियग्रामात् शनैः शनैरुपरमेत् पश्चात्मनः परमात्मनि स्थितिं कृत्वा न किंचिदपि चिन्तयेत् इत्यर्थः ॥ २५ ॥

तत्साधनमाह—

॥ श्लोकः ॥

यतो यतो निश्चरति मनश्चञ्चलमस्थिरं ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥२६॥

॥ टीका ॥

चंचलं मनः यतः यतः इन्द्रियस्थानेषु चरति ततः ततः स्थानात् नियम्य आत्मनि एव आनयेत् अर्थात् श्रवणमननदर्शनस्पर्शनादि इन्द्रियव्यवहारान् आत्मनि एव ईश्वरे योजयेदिति भावः ॥ २६ ॥

तदुक्तक्रियायां लाभमाह—

॥ श्लोकः ॥

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥२७॥

॥ टीका ॥

यथार्थमाह—येन परमात्मना भावनायुक्तेन मनः प्रशान्तं भवति ततः उत्तमं सुखं उपैति शान्तरजसं रजोगुणकामनादिरहितं पापरहितं ब्रह्मभूतं भवतीत्यर्थः ॥ २७ ॥

तत्फलमाह—

॥ श्लोकः ॥

युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यंतं सुखमश्नुते ॥२८॥

॥ टीका ॥

उक्तप्रकारेण आत्मानं परमात्मनि युञ्जन् सन् ब्रह्म संस्पर्शन् सन् अत्यंतं सुखं अश्नुते प्राप्नोतीत्यर्थः ॥ २८ ॥

तत् परमात्मनि युञ्जन् प्रकारमाह—

॥ श्लोकः ॥

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥२९॥

॥ टीका ॥

अर्थात् आत्माषोडशकलायुक्तमन्तष्करणं प्रकाशयति तदा वाणीप्रेरकपरमात्मासहितजीवात्मा सर्वभूतमयो भवति तथा मनबुद्ध्यादि सर्वभूतानि आत्मामय भवति योगयुक्तात्मा एवं प्रकारेण आत्मनि परमात्मनि अव्यवधानरूपेण पश्येदिति भावः ॥२८॥

अथोक्तप्रकारभावनाऽऽब्रह्मस्तम्भपर्य्यन्तं दर्शयति—

॥ श्लोकः ॥

योमां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति॥१९॥

॥ टीका ॥

यः पुरुषः सर्वत्र आब्रह्मस्तम्भपर्य्यन्तं मां पश्यति सर्वं विश्वं मयि पश्यति तस्य उक्तप्राकारज्ञानं अहं कदापि न प्रणश्यामि स पुरुषोऽपि कदापि अनीश्वरवादी न भवतीत्यर्थः ॥ ३० ॥

तदेवाह—

॥ श्लोकः ॥

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोपि स योगी मयि वर्तते ॥३१॥

॥ टीका ॥

यः पूर्वोक्तप्रकारेण सर्वभूतस्थितं मां भजति स योगी वर्तमानावस्थायां मयि वर्तते न तु केवलदेहान्ते इति भावः ॥ ३१ ॥

तत्साधनमाह—

॥ श्लोकः ॥

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥३२॥

॥ टीका ॥

आत्मतुल्येन आत्मात्मनभावं सर्वत्र यः समं पश्यति तथा सुखं दुःखमपि समं पश्याति सर्वत्र अर्थात् यथा मानापनादिभिरात्मनः सुखं दुखं पश्यति तथा सर्वत्र पश्यति सैव योगी परंपदं प्राप्नोतीत्यर्थः॥३२॥

उक्तसमभावं दुष्करं ज्ञात्वार्जुन आह—

॥ श्लोकः ॥

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।
एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ॥
चञ्चलं हि मनः कृष्ण प्रमाथि बलवदृढं ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥३४॥

॥ टीका ॥

अर्थात् उक्तयोगस्य मनसः चञ्चलत्वात् आत्मपक्षे इन्द्रियाणां प्रत्याहारं रूपां स्थितिं दुष्करं मन्ये परपक्षेपि अन्यभावं त्यक्त्वा साम्येन स्थिरां दुष्करं मन्ये तद्दुष्करदृष्टान्तेनाह—वायोरिव इत्यर्थः ॥ ३४ ॥

तदुत्तरमाह—श्रीभगवानुवाच ।

॥ श्लोकः ॥

असंशयं महाबाहो मनो दुर्निग्रहं चलं ।
अभ्यासेन तु कौन्तेय वैराग्येन च गृह्यते ॥३५॥
असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः॥३६॥

॥ टीका ॥

भो अर्जुन तव प्रश्ने संशयं नास्ति मनश्चञ्चलरूपत्वात् किन्तु अभ्यासेन नाम आसनप्राणायामधारणाध्यानप्रत्याहारादि द्वारा मनसः स्थितिर्भवति च पुनः वैराग्येन नाम संन्यासेन अर्थात् अनुभवात्मजीवात्मानिजानुभवरूपदर्शनं मनस्त्यक्त्वा निजरूपेण धारणकृतेन मनः स्थितिर्भवति तद्यथाह—"जगन्ति नित्यं परितो भ्रमन्ति यत्सान्निधौ चुम्बकलोहवद्धि" अस्मिन्दृष्टान्ते जीवस्याऽनुभवाक्षातिरेव चुम्बकवद्वर्णते म-

न बुद्धीन्द्रियादि निजगद्रुपाणि 'लोहवत् वर्णते अत-एवानुभवमेव साधनीयं ॥ ३५ ॥

तदेवाह—

असंयतात्मना नाम आत्मदृष्टिक्षतियतनं विना योगः दुष्प्राप्यः आत्मदृष्टिक्षतियतने न योगं प्राप्तुं समर्थो भवति इत्यर्थः ॥ ३६ ॥

तत्रार्जुनउवाच ।

॥ श्लोकः ॥

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥

॥ टीका ॥

श्रद्धायुक्तो यत्नसिद्धि हितः चलचित्तः पुरुषः योगसिद्धिरहितः कां गतिं गच्छति ॥ ३७ ॥

तद्दृष्टान्तेनाह—

॥ श्लोकः ॥

कच्चिन्नोभयविभ्रष्टः छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥३८॥
एतन्मे संशयं कृष्ण च्छेतुमर्हस्यशेषतः ।
त्वदन्यःसंशयस्यास्य च्छेता न ह्युपपद्यते ॥३९॥

॥ टीका ॥

उभयभ्रष्टो नाम योगसंन्यासगृहस्थसंसार उभयतो भ्रष्टः कश्चिन्न स्यात् अपि तु स्यादेव तद्दृष्टान्तं छिन्नाभ्रं छिन्नमेघो यथा घटाप्रसङ्गाद्विचलितः पूर्वापरामुभयघटां न प्राप्नोति अर्थान्मध्ये नश्यति तद्वद्भवति ॥३८॥

हे कृष्ण एतत्संशयं छेत्तुमर्हसि अतः त्वां विनाऽन्यं संशयछेत्तारं न पश्यामि ॥ ३८ ॥

तदुत्तरमाह—भगवानुवाच ।

॥ श्लोकः ॥

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥४०॥

॥ टीका ॥

हे अर्जुन तस्य यत्नशीलस्य इह वर्तमानावस्थायां अमुत्र आगामी-अवस्थायां विनाशो न विद्यते च पुनस्तस्य कल्याणकृत्कश्चिन्न किन्तु दुर्गतिं गच्छति अपि तु न गच्छति ॥ ४० ॥

तद्विशेषेण दर्शयति—

॥ श्लोकः ॥

प्राप्य पुण्यकृताँल्लोकानुषित्वा शास्वतीः समाः ।
शुचीनां श्रीमताङ्गेहे योगभ्रष्टोऽभिजायते॥४१॥

॥ टीका ॥

स एव योगभ्रष्टः पुरुषः पुण्यकृतान्स्वर्गादिलोकान्प्राप्य तत्रापि असंख्यकसमाः वासं कृत्वा पश्चात् उदारचित्तानां श्रीमतां गेहे जायते इत्यर्थः ॥ ४१ ॥

प्रकारान्तरेण आह—अथवेति—

॥ श्लोकः ॥

अथवा योगिनामेव कुले भवति धीमतां ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशं ॥४२॥

॥ टीका ॥

योगिनां नाम कर्मनिष्ठानां ब्राह्मणानां कुले धीमतां नाम सारासारविवेकवतां कुले जायते तदेवेह लोके दुर्लभतरं इत्यर्थः ॥ ४२ ॥

तदुक्तजन्मलाभमाह—तत्रेति—

॥ श्लोकः ॥

तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकं ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥४३॥

॥ टीका ॥

तत्रापि पौर्वदैहिकं बुद्धिसंयोगं लब्ध्वा भूयः संसिद्धौ यत्नं करोतीत्यर्थः ॥ ४३ ॥

तत्पूर्वाभ्यासं प्रत्यक्षेण दर्शयति—

॥ श्लोकः ॥

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥४४॥

॥ टीका ॥

यद्यपि पूर्वाभ्यासः कालातिक्रमेण विस्मृतो भवति तथापि जन्मान्तरे तत्वविचारहेतुजिज्ञासुर्भवति शब्दब्रह्मविचारेपि अतिनिपुणो भवतीत्यर्थः ॥४४॥

तदेव दर्शयति—

॥ श्लोकः ॥

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्विषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥४५॥

॥ टीका ॥

उक्तनिपुणबुद्धिसङ्गात् तत्वविचारं कुर्वन् सन् तत्वविचारपक्षे अनीश्वरवादरूपकिल्विषात् मुक्तो भवति अनेकजन्मसंसिद्धः जन्मजन्मान्तरे न विस्मृतो भवति परांगतिं नाम कैवल्यरूपं परमेश्वरमेव दर्शयति ॥

तद्दर्शने माहात्म्यमाह—तपस्वीति—

॥ श्लोकः ॥

तपस्विभ्योधिको योगी ज्ञानिभ्योपि मतोधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥

॥ टीका ॥

यत् योगारूढलक्षणं पूर्वकथितं स एव निष्कामो योगी तपस्विभ्योऽधिकः किन्तु तपः कामनासिद्धिहेतुं कुर्वन् तत्वात् तद्वत् ज्ञाननिष्ठात् कर्मनिष्ठादपि स कामित्वात् योगी अधिको भवति अतएव हे अर्जुन त्वमपि निष्कामो भवेत्यर्थः ॥ ४६ ॥

तन्निष्कामयुक्तयोगस्य माहात्म्यमाह—

॥ श्लोकः ॥

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः॥४७॥

॥ टीका ॥

अर्थात् यत् निष्कामरूपं आसनप्राणायामादि साधनरूपं योगं तथा कृष्णार्पणरूपं कर्मयोगं तृतीयाध्यायोक्तं तथा तत्वजिज्ञासारूपं कर्मसंन्यासं चतुर्थाध्यायोक्तं तथा पञ्चमे ज्ञानसंन्यासं कथितं तथा सर्वेषां अन्येषामपि मयि परमेश्वरे अन्तरात्मना नाम मनबुद्धिआदियुक्तभावनया श्रद्धावान् नाम विश्वासयुक्तो यो मां भजति स एव उत्तमो ज्ञेयः इत्यर्थः ॥४७॥

इति श्रीमद्भगवद्गीताटीकायां श्रीपुरुषोत्तमदासकृतायां षष्टोऽध्यायः ॥ ६ ॥

॥ श्लोकः ॥

मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥१॥

॥ टीका ॥

अर्थाद्भगवद्भजनद्वारा भगवत्ज्ञानोत्पत्तिपक्षे संशयं न कर्तव्यमिति ॥ १ ॥

तत् ज्ञेयमर्थं दर्शयति । ज्ञानमिति—

॥ श्लोकः ॥

ज्ञानं तेऽहं स विज्ञानमिदं वक्ष्याम्यशेषतः ।
यद् ज्ञात्वा नेह भूयोन्यद् ज्ञातव्यमवशिष्यते॥२॥

॥ टीका ॥

विज्ञानं नाम बुद्धिविवेकयुक्तं यत् शास्त्रोक्तज्ञानं तद्विशेषेणाहं वक्ष्यामि यत् ज्ञात्वा अन्यज्ञेयार्थे न चेष्टां करोतीत्यर्थः ॥ २ ॥

तदेवाह मनुष्याणामिति—

॥ श्लोकः ॥

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्वतः ॥३॥

॥ टीका ॥

तत्वविचारे मनुष्यातिरिक्तोधिकारीऽन्यो न भवति

तत्रापि सहस्त्राणां मध्ये कश्चिन्मनुष्य आत्मतत्वावाप्तये यत्नं करोति अत्र प्रमाणं यथा प्रथमं मनुष्यरूपाःसनकादयः आत्मतत्वविचारार्थे पितुर्वाक्यं न मन्यते स्म तद्वत् यत्नशीलानां मध्येपि कश्चिदात्मतत्वं बुध्यते तत्रापि यो मदीयभावं त्यक्त्वा अहं रूपेणात्मनं मन्यते सोपि शुद्धभावो न भवति तद्यथाह—भागवते "यर्हि वाच महिम्नेस्वे परस्मिन्कालमाययोः। रमेद्गतसंमोहः त्यक्त्वोदास्तेमतोभयं ॥ अर्थात् उभयमतं अहं मम मतं त्यक्त्वा आत्मतत्वसिद्धिर्भवति ततः कालस्य यद्बालवृद्धादिअवस्था तथा माययाऽपि यत् जाग्रत्स्वप्नादिऽवस्था उभयोरनुभवप्रकाशकरूपजीवात्मा अहं मम भावेन निजतत्वे सिद्धिर्न भवति तदात्मतत्वसिद्धानां मध्ये कश्चिदेव कैवल्यरूपभगवत्तत्त्वं ज्ञायते ॥ ३ ॥

तदेवाह भूमिरिति—

॥ श्लोकः ॥

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥
अपरे यमितस्त्वन्यां प्रकृतिं विद्धि मे परां ।
जीवभूतां महाबाहो ययेदं धार्य्यते जगत् ॥५॥

॥ टीका ॥

उक्तभूमिआदि अष्टौ प्रकृतयः त्रिकालज्ञज्ञानप्रकृतेः कार्य्यरूपा विचारणीयाः तस्मात् अपराः कनिष्टा इत्याहुः तत्कार्यरूपं दर्शयति उक्ताष्टौ प्रकृतयः अध्यात्म अधिभूतअधिदैवरूपाः ता एव राशिचक्रद्वारा व्यक्ताव्यक्ता भवन्ति तत्र भूतभविष्यत्वर्तमानत्रिकालकरूपेण वर्तते उक्तराशिचक्रस्य गमनं शास्त्रेण वर्णितं तदेवशास्त्रं त्रिकालज्ञज्ञानद्वारा परमेश्वरेण निर्मितं तत्र त्रिकालज्ञज्ञानस्य चातुर्य्यं शास्त्रे दृश्यते तदेव चातुर्य्यं कालचक्रानुसारेण बुद्धौ अपि दृश्यते अतएव श्रीभगवतः त्रिकालज्ञज्ञानप्रकृतेः कार्यरूपाः ज्ञातव्याः ततः जीवभूता प्रकृतिः कालमाययोरवस्थानुभवात्मकत्वात्परा नाम उत्कृष्टा कथिता ॥ ५ ॥

उक्तप्रकृतिरुभयोर्जगतः कारणरूपे ईश्वराधीनत्वमाह—एतद्योनीति—

॥ श्लोकः ॥

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।<br>
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥६॥<br>
मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।<br>
मयि सर्वमिदं प्रोक्तं सूत्रे मणिगणा इव ॥७॥

॥ टीका ॥

सर्वाणि योनीनि देवमनुष्यतिर्यङाऽऽदियोनीनि एतत् उक्तपरारूप उभयप्रकृतियुक्तानि एव उपधारय त्वं निश्चयं कुरु कृत्स्नस्य सर्वजगतः उत्पत्तिः विनाशकारणमेवाहं इति अर्थात् यथा त्रिकालज्ञज्ञानरूपा निष्कामा प्रकृतिः कार्यस्थाने मनबुद्धिआदिभिः स कामा वर्तते पराप्रकृतेः जीवो निरभिमानी अपि कार्यस्थाने साभिमानी भवति इत्यर्थः तस्मादाह—उत्पत्ति प्रलयादिकर्ता अहमेव तत्र सत्पुरुषवाक्यं कर्तुमकर्तुमन्यथा कर्तुं समर्थो तत्र श्रीपरमेश्वरात् उद्भवो जगत् एतस्मात् श्रीपरमेश्वरे प्रभवः रूपमुख्यकारणो विचारणीयः ॥ ७ ॥

यथा वृक्षस्य बीजं साधारणं कारणं, असाधारणकारणं भूमिः अन्वयव्यतिरेकमतेन वर्तते मुख्यकारणं अमृतरूपवर्षा तदन्यस्थाने रसरूपेण वर्तते तथास्य जगतः मुख्यकारणं श्रीपरमेश्वरं सर्वत्र समानसूत्रेव प्रोतमिति इत्याह—

॥ श्लोकः ॥

**रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः ।**
**प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥**

पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥
वीजं मां सर्वभूतानां विद्धि पार्थ सनातनं ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥
वलं वलवतां चाहं कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥

॥ टीका ॥

उक्तलक्षणानि सर्वत्रसुखदायिकरूपत्वात् परमेश्वरे परमानन्दस्वरूप एव निर्दृश्यते अतः सर्वत्र समानरूपेण वर्तितत्वात् सूत्रवत् कथितं किन्तु अन्तर्वहिः सर्वत्र पूर्णरूपेण विचारणीयं न केवलं सूत्रवदित्यर्थः ॥

तदेवाह—

॥ श्लोकः ॥

ये चैव सात्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥

॥ टीका ॥

सात्विका भावा देवाः त एव स्वर्गकामनायुक्ताः 'राजसा भावा दैत्याः ते सर्वे कलहाप्रियाः' तामसाभावा राक्षसाः ते सर्वे हिंसादिप्रियाः यद्यपि सर्वे मत्त एव

उत्पन्नाः तथापि तेषु अहं न अर्थात् कामकलहहिंसादि रूपो नाहमिति किन्तु ते मयि अर्थात् तत्तत्कामनया पृथगानन्दरूपेण ते सर्वे मयि एव ज्ञातव्याः अर्थात् उक्तप्रमाणेन निज २ प्रियद्वारा प्रियस्थानेऽऽनन्दो न सिध्यति—किन्तु आनन्दस्थाने प्रियसम्भवःस्यात् अतएव परमेश्वरस्मरणं विना अन्यथा सुखं नास्तीत्यर्थः ॥ १२ ॥

तदुक्तपरमेश्वरस्वरूपं निरूपयति । त्रिभिरिति—

॥ श्लोकः ॥

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥१३॥

॥ टीका ॥

अर्थात् सत्वरजस्तमात्मकैर्ब्रह्माविष्णुशिवादिभिस्त्रिभिरीश्वरैः मोहितः सन् मां परमेश्वरं न जानातीति भावः ॥ १३ ॥

तादृज्ञानहेतुमाह—

॥ श्लोकः ॥

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥१४॥

॥ टीका ॥

तदुक्ता दैवी माया अनेकशास्त्रेषु वर्णितत्वात् दुरत्यया कथ्यते दुःखेन त्याज्या ये मां सर्वत्रान्तर्यामिरूपं नियन्तारं शरणं प्रपन्नास्ते दैवीं मायां तरन्ति ॥ १४ ॥

मायायुक्तस्य लक्षणमाह—न मामिति—

॥ श्लोकः ॥

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥१५॥

॥ टीका ॥

धर्मार्थकामत्रैवर्गिकफलसाधनहेतु यत् यज्ञादिकर्माणि कुर्वन्ति ते दुष्कृतिनो जनाः मां मदीयकैवल्यस्वरूपं न प्रपद्यन्ते अतस्ते नराधमा अभिमानयुक्ता अतएव मायया अपहृतनिजस्वरूपाः तस्मादाह—आसुरं भावमाश्रिताः ॥ १५ ॥

अथ सुकृतिनां लक्षणमाह—

॥ श्लोकः ॥

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥१६॥

॥ टीका ॥

आर्तं नाम संसृतिदुःखनदुःखितः जिज्ञासु आ-

रमतत्वज्ञानहेतुकः अर्थार्थीऽनर्थोपशमकः तद्यथ ह भागवते—"यदा संमोहितो जीवो मायया त्रिगुणात्मना। परोपि मनुतेऽनर्थः तत्कृतं चाधिपद्यते" अर्थात् जीवो मायया परोऽपि तत् मायाकृतं स्वकृतं मन्यते एतदेव अनर्थः तदेवात्र गीतायामाह—तत्र सत्वनिर्मलत्वात्प्रकाशकमनामयं सुखसङ्गेन वध्नाति ज्ञानसङ्गेनाचानघ अर्थादहं ज्ञानी अहं सुखी एतदेव अनर्थरूपं तदनर्थोपशमनार्थे अर्थार्थीजनो मां भजति अहमनुभवद्वारा साक्षाद्रूपं एतदेव ज्ञानिनां लक्षणं इत्येते चतुर्विधा भक्ताः ॥ १७ ॥

तदुक्तज्ञानिकर्तव्यमाह—

॥ श्लोकः ॥

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोत्यर्थमहं स च ममप्रियः॥१८॥

॥ टीका ॥

तेषां उक्तचतुर्विधानां मध्ये ज्ञानी एव युक्त एकभक्तिनिष्कामा अर्थात् केवलप्रेमयुक्ता भक्तिः उत्कृष्टा अत एवाह—तेषां ज्ञानिनामहमेव प्रियः तस्मादेव स एव ज्ञानी मम प्रियः स्यादित्यर्थः ॥ १८ ॥

तद्विशेषेण दर्शयति—

॥ श्लोकः ॥

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतं ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिं ॥

॥ टीका ॥

एते आर्तादि चतुष्टः य सर्व एव उदाराः अर्थाद्विषयकामनारहिताः तत्रापि ज्ञानी आत्मना मे मतं मदीयमतं आस्थिताः किन्तु मदीयव्यतिरिक्त उत्तमो-नास्ति अतो मदीयां अनुत्तमां गतिं मदीयपरमेश्वर रूपे आरूढाः सन्तः मां अनुत्तमां गतिं प्राप्नुवन्तीत्यर्थः ॥ १६ ॥

तदनुत्तमां गतिं दर्शयति । बहूनामिति—

॥ श्लोकः ॥

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥२०॥

॥ टीका ॥

सर्वमिति यथा पूर्वोक्तं रसोहमप्सु कौन्तेय इत्यादि वाक्यमतेन सर्वत्र सुखस्वरूपेण वासुदेव एव व्याप्तं इत्येवं ज्ञानवान् जानाति यत् सर्वे निज २ प्रियद्वारा पृथक् २ सुखं मन्यन्ते तत्र ज्ञानवान् पुरुषः बहूनां जन्मनामन्ते सर्वत्र सुखस्वरूपेण वासुदेवएव मन्यते ॥

उक्तसुखस्वरूपं परमात्मानं त्यक्त्वा निजनिजप्रिय-द्वारा यत् यत् सुखं मन्यते तदेवाह—कामेति—

॥ श्लोकः ॥

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया॥२१॥

॥ टीका ॥

निज निज प्रियसिद्धार्थे पृथक्कामनाद्वारा उक्तज्ञान-सुखस्वरूपं परमेश्वरं हित्वा अन्यदेवताऽऽराधयन्ते त-द्यथा–'आरोग्यं भास्करादिच्छेत् धनमिच्छेद्धुताशनात् । ज्ञानं च शङ्करादिच्छेन्मुक्तिमिच्छेज्जनार्द्दनात्' इति निज निज प्रकृत्या नियताःसन्तः तं तं नियमं धृत्वा तान्देवानाराधन्ते इत्यर्थः ॥ २१ ॥

तत्तत् कार्यसिद्धिप्रकारमाह—य इति—

॥ श्लोकः ॥

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याऽचलां श्रद्धां तामेव विदधाम्यहम् ॥

॥ टीका ॥

यः यः पुरुषः यां यां तनुं अर्थात् यं यं देवं श्रद्धया आराधते तस्य पुरुषस्य तस्मिन् देवेऽचलां श्रद्धां अ-हमेव विदधामि ॥ २२ ॥

तत्राराधने फलमाह—

॥ श्लोकः ॥

स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हितान् ॥

॥ टीका ॥

स आराधको पुरुषो मदीयदत्तश्रद्धया तस्य देवस्याराधनं कुर्वन् सन् मयैव दत्तान्कामान्लभते अतएव सर्वत्र अन्तर्यामिरूपेण नियंतारूपपरमेश्वर एव ज्ञातव्यः अतः प्रकृतिभेदात् परमेश्वरस्य भेदं नास्तीति भावः ॥ २३ ॥

तद्भेददृष्ट्यां दूषणमाह—अन्तवत्तेति—

॥ श्लोकः ।

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसां ।
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥

॥ टीका ॥

तत्फलं अन्तवत् अल्पबुद्धित्वात् पृथक् २ ईश्वरमान्यत्वात् ममभक्ताः मदीयकैवल्यस्वरूपं प्राप्नुवन्ति पूर्णबोधत्वादित्यर्थः ॥ २४ ॥

उक्तकैवल्यस्वरूपस्य अविज्ञातार्थमाह—

अव्यक्तमिति—

॥ श्लोकः ॥

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥२५॥

॥ टीका ॥

अबुद्धयः नाम अहंममेत्यभिमानयुक्ताः पुरुषाः यथा स्वयं व्यक्ताव्यक्तं भवन्ति तथा मदीयस्वरूपमपि व्यक्ताव्यक्तं मन्यन्ते तत्र हेतुमाह मदीयं परं भावं नाम कैवल्यभावं अजानन्तः सन्तः ॥ २५ ॥

तदवजाननहेतुमाह—नाहमिति—

॥ श्लोकः ॥

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोयं नाभिजानाति लोको मामजमव्ययम् ॥२६॥

॥ टीका ॥

सत्वरजस्तमात्मकया कार्यकारणरूपया मदीय योगमायया आवृतः सन् जीवात्मा अहंममत्वभावेनं मूढभावं प्राप्तः मां अजं अव्ययं जन्ममरणादि रहितं न जानाति अतएवाह सर्वस्य प्रकाशो नाहं सर्वजनानां न ज्ञेयरूपमित्यर्थः ॥ २६ ॥

तदज्ञेयरूपमाह—

॥ श्लोकः ॥

वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चन॥२७॥

॥ टीका ॥

त्रिकालज्ञज्ञानस्वरूपं परमेश्वरं न कश्चित् वेत्ति तद्यथाह भागवते स्वरूपं लक्षणं—"तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा। धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि"। यत्र भगवतः त्रिकालज्ञज्ञानयुक्तस्वरूपे अध्यात्माधिभूताधिदैवात्रिगुणकार्यविशिष्टजीवदेहवत् यत् मन्यते स एव विनिमयः। अन्यो अन्यवद्भासते यथा तेजोरविकिरणं क्वचिद्भूमिसंयुक्तं जलवदृश्यते तस्मादाह धाम्ना स्वेन स्वयं कृतदेहेन सर्वदाकालकृतं बालवृद्धादि अवस्थारूपं कुहकं रहितं अत एवाह सत्यस्वरूपं परमेश्वरं धीमहि स्वकृतदेहस्य प्रमाणं अत्र गीतायामाह—'प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ २७ ॥

अथ भगवद्विषये अज्ञातानां लक्षणमाह—इच्छेति—

॥ श्लोकः ॥

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।
सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥२८॥

॥ टीका ॥

अर्थात् इच्छाद्वेषयुक्ताः पुरुषाः परमानन्दस्वरूपमज्ञात्वा वारं वारं जन्ममरणादिसंसृतिं प्राप्यन्ते॥२८॥

तत्स्वरूपज्ञातृपुरुषाणां लक्षणमाह—येषामिति—

॥ श्लोकः ॥

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥२९॥

॥ टीका ॥

ये पुरुषाः इच्छाद्वेषादिनिर्मुक्तास्ते निष्कामाः सन्तः मां भजन्ते ॥ २९ ॥

अथ मुमुक्षूणां लक्षणमाह—जरा इति—

॥ श्लोकः ॥

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम्॥३०॥
साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेपि च मां ते विदुर्युक्तचेतसः ॥३१॥

॥ टीका ॥

उक्तसाधिभूतादिलक्षणं अष्टमाध्याये वर्णयति यत् ज्ञात्वा प्राणप्रयाणकाले मां प्राप्तुं योग्याभवन्तीत्यर्थः॥

इति श्रीमद्भगवद्गीताटीकायां श्रीपुरुषोत्तमदासकृतायां सप्तमोऽध्यायः ॥ ७ ॥

उक्तसाधिभूतादिलक्षणं अर्जुनः पृच्छति—

अर्जुन उवाच—

॥ श्लोकः ॥

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥
अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥२॥

इत्थं अर्जुनकृतसप्तप्रश्नानां उत्तरमाह—

श्रीभगवानुवाच—श्लोकः ।

अक्षरं ब्रह्म परमस्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥
अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोहमेवात्र देहे देहभृतां वर ॥ ४ ॥
अन्तकाले च मामेव स्मरन् मुक्तकलेवरम् ।
यः प्रयाति समद्भावं याति नास्त्यत्र संशयः ॥५॥

॥ टीका ॥

अक्षरं नाम प्रणवाक्षरं ओंकारं परंब्रह्म उच्यते यद्यपि सर्वाणि छन्दांसि शब्दब्रह्म उच्यते तदपि स- मस्तछन्दसां ओंकारप्रणव एव कारणरूपत्वात् परं-

ब्रह्मेत्युच्यते तथास्मिन्नध्याये ओमित्येकाक्षरं ब्रह्मेत्येवं वक्ष्यति इति वचनात् परंब्रह्म इत्युक्तं यत् ओंकारस्य अकारउकारमकाररूपास्त्रयो वर्णाः तदेवाध्यात्मरूपाः कथिताः अत्र श्रुतेः प्रमाणमपि कथितम् प्रत्यगानन्द परमपुरुषं प्रणवपुरुषं अकारउकारमकारश्चेति तान्येकधा संभवेत्तदेतदोमिति "ओमित्युच्यते योगी जन्म-संसारबन्धनात्" इति अथ भावोद्भवकरो भूत इति अस्मिन् अध्यायोक्तं कविं पुराणमनुशासितारमिति भूतनामस्वरूपं भावोद्भवकरमित्यर्थः विसर्गनाम यन्मन्त्रेण यद्देवता निरूपिता तद्देवेन दत्तं फलं विसर्गरूपं ज्ञेयं तद्यथाह श्रुतिः गकारपूर्वं अकारमध्यमरूपं अनुस्वारश्चान्तरूपं विन्दुरुत्तररूपं नादस्संधानं सगं हित्वा सन्धिः स एषा गणेशविद्यागणकऋषिर्निसृग्धाय त्रिछन्दः। ओंगङ्गणपतये नमः इति विसर्गः। अत्रस्थाने फलदायको देव अधियज्ञरूप एव कथितः अक्षर नाम मन बुद्धीन्द्रियादीनि अधिभूतमुच्यते तेषां प्रकाशकदेवत्वरूपं क्षेत्रज्ञजीवात्मा पुरुष एव ज्ञेयमिति। तत्राह अन्तकालेति उक्तमनोबुद्धिप्रादियुक्त जीवात्मा अन्तकाले मां स्मरन् सन् मामेव प्राप्नोति ॥ ५ ॥

ताद्विशेषेण दर्शयति यं यमिति—

॥ श्लोकः ॥

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥६॥

॥ टीका ॥

पुरुषः अन्तसमये यं यं भावं स्मरति तं तमेव प्राप्नोति ॥ ६ ॥

तत्राह तस्मादिति—

॥ श्लोकः ॥

तस्मात्सर्वेषु कालेषु मामनुस्मर युद्ध च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥ ७ ॥

॥ टीका ॥

तस्मात् सर्वदाकाले मां स्मरणं कुरु मनस्कामना तथा बुद्धिविचारयुक्तमननरूपमत्तत्वं स्मरणं कुर्वन् सन् मत्तत्वमननद्वारा युद्धं कुर्वन् मां प्राप्स्यसीत्यर्थः ॥ ७ ॥

तदेवाह अभ्यासेति—

॥ श्लोकः ॥

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥

॥ टीका ॥

अभ्यासयोगसहित अन्यभावराहितेन चेतसा चिन्तयन् सन् परं दिव्यं पुरुषं जानातीत्यर्थः ॥ ८ ॥

तत्पुरुषस्वरुपमाह—कविमिति—

॥ श्लोकः ॥

कविं पुराणमनुशासितार-
मणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूप-
मादित्यवर्णं तमसः परस्तात् ॥ ९ ॥

॥ टीका ॥

कविं पुराणं सनातनं आदिअन्तरहितं कविं अनुशासितारं वाणीनियन्तारं तद्यथा भागवते तेनेब्रह्महृदये आदिकविना आदिकवि नाम ब्रह्मणः हृदये ब्रह्मवेदः येन प्रकाशितः स एव पुराणकविः अणोरपि अणुः सूक्ष्मादपि सूक्ष्मः अर्थात् क्षेत्रज्ञसूक्ष्मरूप जीवात्मत्वात् कैवल्यरूपोऽतिसूक्ष्मः स एव सर्वस्य कर्तारूपं ज्ञेयं अतआह सर्वधातारं आदित्यवर्णं नाम त्रिकालज्ञज्ञानयुक्त सदा प्रकाशरूपं तमसः परस्तात् अव्यक्तगतिरहितं अतएव जीवात्मनः अचिन्त्यरूपं इत्याह यः पुरुषः अनुस्मरेत् स एव प्राप्नोति ॥ ६ ॥

तत्प्राप्तिहेतुमाह—प्रयाणकालेति—

॥ श्लोकः ॥

प्रयाणकाले मनसाचलेन
भक्त्यायुक्तो योगबलेन चैव ।

भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥

॥ टीका ॥

भक्तयायुक्तः धर्मादित्रैवर्गिकवासनामुक्तः भगवद्भक्तियुक्तः स एव पुरुषः योगबलेन प्राणायामबलेन मनसाचलेन चञ्चलवृत्तिरहितेन अन्तसमये भ्रुवोर्मध्ये सम्यक् बाह्यवृत्तिं त्यक्त्वा प्राणमवेश्य सः परं पुरुषं उक्तकैवल्यरूपं पुराणं कविं प्राप्नोतीत्यर्थः ॥ १० ॥

उक्तपरंपुरुषलक्षणमाह—-यदिति—

॥ श्लोकः ॥

यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति
तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ ११ ॥

॥ टीका ॥

वेदविदः यदक्षरं नाम अखण्डरूपं वदन्ति प्रमाणं "अखण्डमण्डलाकारं व्याप्तं येन चराचरमिति" वीतरागाः कामनारहिताः यतयो यस्मिन् प्रविशन्ति यत्पदं इच्छन्तः सन्तः ब्रह्मचर्य्यं चरन्ति तत्पदं त्वां प्रति संक्षेपेण कथयामि ॥ ११ ॥

तदेवाह—सर्वेति—

॥ श्लोकः ॥

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मून्ध्र्याधायात्मनः प्राणमास्थितो योगधारणम् ॥

॥ टीका ॥

सर्वद्वाराणि यद्बहिर्गतिहेतु श्रवणाक्षिमुखनासिकादिनवद्वाराणि तेषां संयमं कृत्वा मनो हृदये निरोधं कृत्वा पश्चात् आत्मनः मनःप्राणं मूर्द्ध्नि मस्तके निधाय योगधारणं स्थितिःस्यात् ॥ १२ ॥

तदनन्तरं यत्कर्तव्यं तदाह—ओमिति—

॥ श्लोकः ॥

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिं॥१३॥

॥ टीका ॥

ओं इति ब्रह्मरूप प्रणवाक्षरं व्याहरन् मनसि उच्चारयन् मां पूर्वोक्ताऽक्षररूपं अनुस्मरन् न विस्मृत सन् देहान्तसमये दशमद्वारं भित्वा यः प्रयाति सः परमां गतिं प्राप्नोति ॥ १३ ॥

उक्तगतिरधिकारीपुरुषाणां लक्षणमाह—अनन्येति—

॥ श्लोकः ॥

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥

॥ टीका ॥

अन्यचिन्तां त्यक्त्वा यो मां उक्तप्रकारेण नित्ययुक्तः स्मरति तस्य सुलभोहमित्यर्थः ॥ १४ ॥

तत्फलमाह—मामिति—

॥ श्लोकः ॥

मामुपेत्य पुनर्जन्मदुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥

॥ टीका ॥

उक्तप्रकारेण मां प्राप्ताः सन्तः पुनः दुःखालयरूपजन्ममृत्युं न प्राप्नुवन्ति ॥ १५ ॥

अप्राप्तपुनर्भवस्य लक्षणमाह—आब्रह्मेति—

॥ श्लोकः ॥

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥

॥ टीका ॥

अर्थात् सत्यलोकपर्यन्तमपि पुनर्भवस्थानं तस्मा-

न्मूर्द्धि भेदद्वारा तत्र न गन्तव्यं अतएव मां उपेत्य पुनर्जन्म न भवतीत्यर्थः ॥ १६ ॥

उक्तपुनरावृत्ते लक्षणमाह—सहस्रेति—

॥ श्लोकः ॥

सहस्रयुगपर्य्यन्तमहर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रां तां तेऽहोरात्रविदो जनाः॥१७॥
अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥१८॥

॥ टीका ॥

अर्थात् चतुर्दशमनुपर्य्यन्तं ब्रह्मणो दिनं भवति तावदेव रात्रिर्भवति एवंभूनाहोरात्रानुसारेण शतवर्षाणि ब्रह्मणः परमायुः कथ्यते ततः पश्चाद्ब्रह्मापि अव्यक्तावस्थां प्राप्नोति ॥ १८ ॥

तद्व्यक्ताव्यक्तरूपस्य तत्वमाह—भूतग्रामेति—

॥ श्लोकः ॥

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवन्त्यहरागमे ॥१९॥

॥ टीका ॥

अत्र निर्गुणवादिनः कृतभ्यागमकृतन्यासः अर्थात् सत्वस्य उत्पत्तिविनाशो न भवतीति प्रमाणद्वारा मन-

बुद्ध्यादि भूतग्रामस्य व्यक्ताव्यक्तमस्ति न तु जीवात्म इति मन्यन्ते तत् अशुद्धाविवेकं यथा पूर्वोक्तसप्तमाध्याये पृथक् पृथक् नामरूपद्वारा स गुणोपासनां त्यक्त्वा सर्वस्य वशी सर्वस्य नियन्ता सर्वेश्वर इति श्रुतिप्रमाणेन सर्वत्रान्तर्य्यामीरूपमीश्वरं वर्णितं यो यो यां यां तनुं भक्तः इत्यादिवाक्येन तद्वत् जीवात्मापि अत्यन्त सत्यं न घटति तत् प्रमाणं दशमेवेदस्तुत्यामुक्तं "यं यं पद्य जहात्यनुशयैः सुप्तकुलाये यथा। तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिं॥" यथा सुप्तं पुरुषं अन्यो जाग्रतः पुरुषः दर्शयति तथा प्रकृति सङ्गात् जीवात्मापि शयनं करोति तत्र कैवल्यो जागर्ति इति अथ अनुशायीरूपं साक्षाद्दर्शयति यत्स्वप्नसुषुप्तिसमये जीवस्य अनुभववृत्तिर्न विद्यते अथान्यप्रमाणं एकादशे "आसीद्ज्ञानमथोऽर्थमेकमेवाविकल्पितं। यदा विवेकनिपुणा आदौ कृतयुगे युगे॥ ज्ञानिनामद्रष्टा अर्थ नामदृश्य एतदुभौ एकएवाविकल्पितं ब्रह्मणि लीनमासीत् अयुगे नाम सृष्टिपूर्वे ततः प्रथमं सत्ययुगं तत्रापि द्विधाभाशं दृश्यते अत एव त्रिकालज्ज्ञानयुक्तः परमेश्वरसर्वान्तर्यामिरूपेण वर्तते तत्प्राप्तिहेतु भूतग्रामं कथितं तदग्रे क्रमेण दर्शयति॥ १६॥

तस्मादाह—पर इति—

॥ श्लोकः ॥

परस्तस्मात्तु भावोन्यो व्यक्तोऽव्यक्तात्सनातनः।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥

॥ टीका ॥

यः सनातनः पुरुषः व्यक्ताव्यक्तात् परः स सर्वेषु भूतेषु अन्तर्यामिरूपेण वर्तितः सन् न विनश्यति व्यक्ताव्यक्तं न प्राप्नोतीत्यर्थः ॥ २० ॥

तद्विशेषरूपं दर्शयति—अव्यक्तेति—

॥ श्लोकः ॥

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥२१॥

॥ टीका ॥

यः सर्वभूतेषु स्थितः स एव कैवल्यरूपत्वात् अव्यक्तः अक्षर इत्युक्तः स एव ईश्वरस्वरूपं यं प्राप्य न निवर्तन्ते पुनर्व्यक्ताव्यक्तरूपं न भवेत् ॥ २१ ॥

अव्यक्ताव्यक्तगतिर्निर्वाणहेतुमाह—पुरुष इति—

॥ श्लोकः ॥

पुरुषः सः परः पार्थ भक्त्यालभ्यस्त्वनन्यया।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥

॥ टीका ॥

भूतग्रामएव अन्तष्करणरूपेण कूटस्थरूपपुरुषाख्यानं लभते तत्पञ्चदशाध्याये कथितं द्वाविमौ पुरुषौ लोके इति स एव पुरुषः कैवल्यरूपं पुरुषोत्तमं अनन्यभक्तियोगे न लभते यस्यान्तःस्थाने सर्वभूतानि सन्ति येन जगत्सर्वं आवृतं तस्यावरणं नास्तीत्यर्थः ॥

अथ आवृतिअनावृतिलक्षणमाह—यत्रेति—

॥ श्लोकः ॥

यत्र काले त्वनावृत्तिमावृतिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥२३॥

॥ टीका ॥

यत्कालद्वारा अनावृति नाम मोक्षरूपं भवति आवृतिनामाऽव्यक्तरूपं भवति तत्कालं वक्ष्यति। ।२३॥

तत्कालमाह—अग्निरिति—

॥ श्लोकः ॥

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः॥२४॥
धूमोरात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥२५॥

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्यया वर्तते पुनः ॥२६॥

॥ टीका ॥

अथ स कामीनां निष्कामीनां उभयोर्गतिरूपं कालं दर्शयति तत्र धूमरात्र्यादिरूपेण स कामीनां मार्गं कथितं यस्मिन् मार्गे चन्द्रज्योतिसङ्गात् पुनर्जन्म भवति तथा अग्निज्योतिसङ्गात् निष्कामीनां मार्गं दर्शितं तत्र उत्तरायणकथनेन ऊर्द्धगति यद्दर्शितं तदेव सत्यलोकपर्य्यन्तं न मन्तव्यं किन्तु ब्रह्मणोपि पुनरावृत्तित्वात् ततः कालचक्रं ध्रुवमण्डलेन संयुजितं अत्र दृष्टान्तमाह—यथा पुरुषाणां समानरूप नाभिमण्डलस्थानात् प्राणाः प्राणोव्यानरूपेण ऊर्द्धगामिनो भवन्ति अपानरूपेण अधोगामीनो भवन्ति त एव प्राणाः कालगतिसङ्गात् उत्पद्यन्ते तद्यथाह गुणव्यतिकरः कालः तत्र कालसङ्गात् सत्वगुण ऊर्द्धगामी भवति तमोगुण अधोगामी भवति रजोगुणो मध्यदेशे भ्रमति तत्र विराटरूपस्य नाभिस्थानं ध्रुवमण्डलं तदधिपतिरूपो ध्रुवः श्रीभगवद्वासुदेवाद्व्राणी प्राप्तवान् भागवते कथितं तस्मात् ओङ्कारमन्त्रोचारण पूर्वकं प्राणान् त्यजन् सन् ध्रुवमण्डलं भित्वा त्रिका-

तज्ज्ञानयुक्तअनावृत्तिरूप वासुदेवाख्यानं सर्वान्तर्या-मीधामं प्राप्नोति यत् अकारउकारमकारादि त्रिवर्णा-त्मकं ओङ्कारं तत् आगामीकालसङ्गात् अकारं उत्त-रकालसङ्गात् उकारं मध्यमकालसङ्गात् मकारं इति त्रिकालज्ञसाक्षीभूतज्ञानद्वारा ओङ्कारं निर्मितं अतः सगुणोपासकानां एतदेव सद्गतिर्वर्णिता किन्तु स एव वासुदेव अनावृतत्वात्सर्वान्तर्यामिरूपेण वर्तते अतएव परा पश्यन्ति मध्यमावैपरीति चतुर्विधा वाणी वासुदेवप्रेरणेन भवति चत्वारिवाकूऽपरिमितापदा-नीति श्रुतिः ॥ २६ ॥

अथोक्तज्ञानस्य महात्ममाह—नैतेति—

॥ श्लोकः ॥

नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवाऽर्जुन ॥२७॥

वेदेषु यज्ञेषु तपस्सु चैव
दानेषु यत्पुण्यफलं प्रदिष्टं ।
अत्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यं ॥ २८ ॥

॥ टीका ॥

हे पार्थ उक्तसृतिनाम मार्गं यो जानाति स मोहं

न प्राप्नोति तस्मात् त्वमपि योगगतिं ज्ञात्वा युद्धं कुरु ॥ विशेषमाहात्म्यमाह—वेदे यज्ञे तपसि दाने च यत्पुण्यं भवति तत्सर्वं उत्क्रान्तिमार्गगतिज्ञानविचारेण भवति एतद्वेत्ता योगी परं स्थानं प्राप्नोति इत्यर्थः ॥२८॥

इति श्रीमद्भगवद्गीताटीकायां श्रीपुरुषोत्तमदासकृतायां अष्टमोऽध्यायः ॥ ८ ॥

---

अथान्तर्यामिरूपस्य श्रीभगवतः अनावृत्तत्वलक्षणमाह

श्रीभगवानुवाच—श्लोकः ।

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यत् ज्ञात्वा मोक्ष्यसेऽशुभात् ॥

॥ टीका ॥

कार्यकारणरूपतत्वविचारणं गुह्यज्ञानं तद्व्यतिरिक्तं जीवात्मातत्वविचारणं गुह्यतरं ज्ञानं कैवल्यरूपपरमात्मातत्वविचारणं गुह्यतमं ज्ञानं, अन्यत्सुगमं ॥१॥ तद्गुह्यतमज्ञानस्य व्याख्यामाह—राजविद्या इति—

॥ श्लोकः ॥

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥

॥ टीका ॥

सर्वशास्त्रविद्यानां मध्ये एतदेव राजविद्या मन्त्रोपदेशरूपसर्वगुह्यज्ञानेषु एतदेव राजगुह्यं श्रेष्ठतरं सर्व गुह्योत्तममित्यर्थः पवित्रेषु अन्तष्करणशुद्धिहेतु एतदेव उत्तमसाधनं अवगमं नाम मनवाणी-अगोचरं यत् धर्मं प्रत्यक्षेण कथनं अव्ययरूपं सुखं कर्तुं योग्यमिदं शास्त्रमित्यर्थः ॥ २ ॥

अस्य धर्मस्य विपरीतमाह—अश्रद्धेति—

॥ श्लोकः ॥

अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥३॥

॥ टीका ॥

अस्य धर्मस्य अश्रद्दधाना विश्वासरहिताः पुरुषाः मां अप्राप्ताः सन्तः मृत्युसंसारचक्रे भ्रमन्ति ॥ ३ ॥

अथ मृत्युञ्जयस्य लक्षणमाह—मयेति—

॥ श्लोकः ॥

मया ततमिदं सर्वं जगदव्यक्तमूर्त्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥४॥

॥ टीका ॥

इदं जगत्सर्वं जगन्ति इति जगत् अर्थात् गति-

रूपं सर्वं मया आततं मयि एव व्याप्तं अतएवाह सर्वभूतानि मयि आवृतानि तेषु अहं न आवृतोस्मी-त्यर्थः ॥ ४ ॥

तदेवसाक्षाद्दर्शयति—न चेति—

॥ श्लोकः ॥

न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥

॥ टीका ॥

यर्हि त्वं मत्स्थाने भूतानि न मन्यसे तर्हि मदीय योगैश्वर्याणि पौरुषाणि पश्य तत्कथं अहं भूतभृत् न भूतस्थभूतान् धारयामि न भूतेषु अहं अन्तर्यामिरू-पेण भूतभावनः भूतानां पोषकोहमिति यथा घटमठ-गत अकाशवत् अपरिछिन्नमित्यर्थः ॥ ५ ॥

तदेव दर्शयति—यथेति—

॥ श्लोकः ॥

यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥

॥ टीका ॥

यथा अकाशे वायुर्भ्रमति वहिर्न गच्छति तद्वत्सर्व-भूतानि मत्स्थाने भ्रमन्ति न मद्वाहिरित्यर्थः ॥ ६ ॥

तद्भ्रमणरूपं दर्शयति—सर्वेति—

॥ श्लोकः ॥

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥७॥

॥ टीका ॥

सर्वभूतानि ब्रह्मादिमशकपर्यन्तानि मदीयां सर्वयोनिमयां अव्यक्तरूपां प्रकृतिं कल्पक्षये सर्वे एव यान्ति प्रविशन्ति तान्येव भूतानि कल्पादौ अहं पुनः सृजामि ॥ ७ ॥

पुनः सृष्टेः कारणमाह—प्रकृतिमिति—

॥ श्लोकः ॥

प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥

॥ टीका ॥

अत्र स्वां प्रकृतिं नाम अहङ्कारमनबुद्धिआदीनि तत्राविष्ठजीवात्मनः अहं ममेत्यभिमानत्वात् पुनः पुनः सृजामि अभिमानविनाशार्थे इति भावः तदभिमानलक्षणमाह—इमं भूतग्रामं प्रकृतेर्वसादहं कृत्स्नं नाम कृतं इत्युक्तप्रकारेण परमेश्वरकृतं निज-

कृतं मन्यते इत्यभिमाननिवारणहेतुः पुनः पुनः सृजामि इत्यर्थः ॥ ८ ॥

इदानीं परमेश्वरस्य कर्तृत्वमाह---न चेति--

॥ श्लोकः ॥

न च मान्तानि कर्माणि निबध्नन्ति धनञ्जय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥

॥ टीका ॥

अर्थात् जीवात्मनः अभिमाननिवारणहेतु उपकारकर्माणि यदहं करोमि तेषु कर्मसु अहं बद्धो न भवामि, कस्मात्? तत्फले उदासीनवदनासक्तत्वादित्यर्थः॥

तत्कर्तृत्वमाह—मयेति—

॥ श्लोकः ॥

मयाध्यक्षेण प्रकृतिः सूयते स चराचरम् ।
हेतुनानेन कौन्तेय जगद्धि परिवर्तते ॥ १० ॥

॥ टीका ॥

मयाध्यक्षेण मदीय ईक्षणदृष्टिः प्रेरणद्वारा प्रकृतिः चराचरं जगत्सर्वं सूयते नाम जायते इति तद्भगवतः ईक्षणं द्विविधं तद्यथा द्रष्टृरूपेण जीवात्मा एव एकनयनं तथा त्रिकालज्ज्ञानोपि त्रैकालदर्शिकत्वाद्वितीय नयनं इत्युक्तउभयप्रकृतिद्वारा अहं सृष्टिं करोमि त-

दुक्तं सप्तमाध्याये एतद्योनीनीति तदाह अनेन हेतुना उक्तचक्षुभ्यां मया जगत् परिवर्तते उत्पत्तिलयं भवतीत्यर्थः ॥ १० ॥

एतदेवविस्तारितमाह—अवजानन्तीति—

॥ श्लोकः ॥

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११ ॥

॥ टीका ॥

यत् त्रिकालज्ञज्ञानद्वारा देहादिनिर्माणं करोमि तद्यथाह बहूनि मे व्यतीतानि इति वचनात् त्रिकालज्ञज्ञानयुक्तमदीयदेहं मूढाः अहमभिमानयुक्ताः पुरुषाः मानुषीं तनुं मन्यन्ते यथा एकचक्षु द्वितीयचक्षुर्न दृश्यते तथा द्रष्टारूपो जीवात्मापि मम त्रिकालज्ञस्वरूपं न पश्यति मदीय महाईश्वरत्वभावं अजानन्तः सन्तः मानुषीं तनुं मन्यन्ते इति भावं । अथ महेश्वरत्वं श्रुतिप्रमाणे गणपत्युपनिषदेनाह त्वं गुणत्रयातीतः त्वं देहत्रयातीतः त्वं कालत्रयातीतः त्वं शक्तित्रयात्मकः इति तत्र ज्ञानशक्तिः क्रियाशक्तिः इच्छाशक्तिः इति तिस्रःशक्तयः तत्र ज्ञानशक्तिक्षेत्रज्ञरूपाजीवभूताक्रियाशक्तिः त्रिकालज्ञज्ञानरूपा यद्द्वारा अव-

तारादिलीलां करोति परमानन्दस्वरूपस्य यत् प्रियलक्षणं तदेव इच्छाशक्तिः तद्भगवतः इच्छां अन्यथाकर्तुं न कोपि समर्थः अतएव महेश्वर इति कथितः ॥११॥

अथाज्ञातपुरुषस्य लक्षणमाह—मोघाशेति—

॥ श्लोकः ॥

मोघाशामोघकर्माणो मोघज्ञानाविचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥१२॥

॥ टीका ॥

यद्भगवद्भक्तिं विना चातुर्वार्गिकीमाशां कुर्वन्ति ते एव वृथा ज्ञेयाः तत्फलदायिकपरमेश्वरत्वात् अत एव उक्तं मोघाशाः तत्फलसिद्ध्यर्थं यद्यत् कर्माणि कुर्वन्ति तत्कर्ममपि वृथा देहमोघरूपत्वात् यत् ज्ञानं वेदेषु कथितं तद्वेदस्य वहुअर्थवादिकत्वात् तदुक्तज्ञानोपि मोघः तत्कारणमाह राजसी असुरी तामसी राक्षसी प्रकृत्या मोहिताः भगवद्भक्तिविहीनाः भवन्ति ॥

अथ सात्विकीं प्रकृतिमाह—महात्मान इति—

॥ श्लोकः ॥

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥१३॥

॥ टीका ॥

दैवीं नासात्विकीं प्रकृतियुक्ताः महात्मनः पुरुषाः अनन्यमनसः नाम यद्वेदेन पृथक् नाम रूपा देवा वर्णिताः तत्र सर्वत्रान्तर्यामिरूपेण सर्वस्य नियन्तारं मां एव मन्यन्ते यथाह सप्तमेऽध्याये यो यो यां यां तनुं भक्तः इत्यादिप्रकारेण आदिभूतं मां अव्ययरूपं ज्ञात्वा भजन्तीत्यर्थः ॥ १३ ॥

तद्भजनप्रकारमाह—सततमिति—

॥ श्लोकः ॥

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते॥१४॥

॥ टीका ॥

पूर्वोक्ताः महात्मानः नित्ययुक्ताः सन्तः मां विशुद्धसत्वमूर्तिं कीर्तयन्ति नमस्यन्ति उपासयन्तीत्यन्वयः ॥

उक्तप्रकारेण सर्वेषां ज्ञानीऽज्ञानिनां भक्तिलक्षणं निरूपितं इदानीं ज्ञानिनां वेदवेत्तानां लक्षणमाह—

ज्ञानेति—

॥ श्लोकः ॥

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतो मुखम् ॥१५॥

॥ टीका ॥

अर्थात् पृथकरूप एकत्वेन तदेवाह विश्वतोमुखं सर्वविश्वमयमेकरूप वेदवेत्तारः ज्ञानिनः मां उपासते ॥

तदेवदर्शयति अहं क्रतुरिति—

॥ श्लोकः ॥

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।
मन्त्रोहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥
पिताहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोङ्कार ऋक् साम यजुरेव च ॥१७॥
गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं वीजमव्ययम् ॥१८॥
तपाम्यहमहं वर्षं गृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥

॥ टीका ॥

अर्थात् क्रतुर्नाम पक्वानयज्ञं यज्ञनाम अपक्वयज्ञं स्वधानाम जलतिलादिभिः पितृयज्ञं औषधं नाम यवसमिधादयः मन्त्रनाम स्वाहास्वधावषट्कारादि आज्यं घृतं अग्निर्वह्निःहुतं श्रुवं ॥ १६ ॥ यज्ञप्रभृतिसङ्कल्परूपाः संस्कारापितादयः ज्ञेयाः वेद्यं देवरूपं पवित्रं

॥ श्लोकः ॥

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्वेनातश्च्यवन्ति ते॥२४॥

॥ टीका ॥

सर्वयज्ञानां भोक्ता प्रभुः अहमेव एतदेव अनन्यभावः यः एतद्भावं न जानाति सश्च्यवति उक्तस्वर्गाद्भ्रष्टो भवतीत्यर्थः ॥ २४ ॥

तदेवाह—यान्तीति—

॥ श्लोकः ॥

यान्ति देवव्रता देवान् पितॄन्यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोपि मां ॥

॥ टीका ॥

यो देवस्याराधनं करोति स देवलोकं प्राप्नोति ये मद्भक्तास्ते मां यान्ति यथाह श्रुतिः सर्वस्य वशी सर्वस्य नियन्ता सर्वेश्वर इत्युक्तं ज्ञात्वा मां यजन्ति ते अन्तर्यामीरूपं मां प्राप्नुवन्तीत्यर्थः ॥ २५ ॥

इदानीं भगवत्पूजने शुद्धविधिमाह—पत्रमिति—

॥ श्लोकः ॥

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥२६॥

॥ टीका ॥

भक्तिभावयुक्तः पुरुषः यत् किञ्चित् पत्रपुष्पादिकं ददाति तदेवाहमश्नामीत्यर्थः ॥ २६ ॥

तस्मादाह—यदिति—

॥ श्लोकः ॥

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥२७॥

॥ टीका ॥

अर्थात् सर्वकर्माणि अन्यवासनां त्यक्त्वा मम प्रीत्यर्थं मदर्पणं कुरु ॥ २७ ॥

तत्फलमाह—शुभेति—

॥ श्लोकः ॥

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥२८॥

॥ टीका ॥

उक्तप्रकारेण भक्तियुक्तः गृहाश्रमेपि संन्यासी भवतीतिभावः ॥ २८ ॥

तत्कारणमाह—समोहमिति—

॥ श्लोकः ॥

समोहं सर्वभूतेषु न मे द्वेष्योस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥

॥ टीका ॥

न मे द्वेष्योस्ति यथा पूतनादि न मे प्रियोस्ति यथा साभिमानिनः जयविजयादयः अतएव समोहं सर्वभूतेषु इत्याह अतएव ये मयि भावनां कुर्वन्ति अहमपि तेषां भावनां करोमीत्यर्थः ॥ २९ ॥

तद्भजनमाहात्म्यमाह—अपि चेदिति—

॥ श्लोकः ॥

अपि चेत्सु दुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः॥३०॥

॥ टीका ॥

दुराचारः आचाररहितोपि पुरुषः अन्यफलकांक्षां त्यक्त्वा मां भजते सम्यक् निष्ठायुक्त स एव साधुर्ज्ञातव्य इति ॥ ३० ॥

तत्फलमाह—क्षिप्रमिति—

॥ श्लोकः ॥

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं नि गच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति॥३१॥

॥ टीका ॥

स एव शीघ्रं भागवद्धर्मं प्राप्य शश्वत् शान्तिरूपं कैवल्यपदं प्राप्नोति इति मम प्रतिज्ञां कौन्तेय त्वं

जानीहि किन्तु मद्भक्तः जन्ममरणादिसंसृतिं न पश्यति ॥ ३१ ॥

तदुक्तधर्मस्य अधिकारित्वमाह—मां हीति—

॥ श्लोकः ॥

मां हि पार्थ व्यपाश्रित्य येपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेपि यान्ति परां गतिम् ॥
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व मां ॥३२॥

॥ टीका ॥

मदीयभागवद्धर्मयुक्ताः स्त्रीशूद्रादयोपि परां गतिं यान्ति तर्हि ब्राह्मणादीनान्तु किं वक्तव्यं न किमपि तत्राधिकमाह इह अनित्यलोके सुखं भुक्त्वा अन्ते मां प्राप्स्यन्ते अर्थात् तेषां विषयभोगो न बाधत इत्यर्थः ॥

अतएवाह—मन्मना भवेति—

॥ श्लोकः ॥

मन्मना भवमद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥३४॥

॥ टीका ॥

मन्मना नाम मन्स्कामनाद्वारा मदीय कैवल्यतत्वं मननं कुरु तथा मद्विषये विश्वासयुक्तभक्तिं कुरु म-

द्यजनमदर्थे कर्माणि कुरु मां नमस्कुर्वन्सन् मत्परायण आत्मानं मयि युक्त्वा मां एव प्राप्स्यसि इत्यर्थः ॥३४॥

इति श्रीमद्भगवद्गीताटीकायां श्रीपुरुषोत्तमदासकृ-
तायां नवमोऽध्यायः ॥ ९ ॥

---

अथ पूर्वोक्तवाक्ये मन्मनाभव इत्यनेन यत् मननं कथितं तदेव मननसिद्धिहेतु निजविभूतियोगं दर्शयति।

श्रीभगवानुवाच—श्लोकः।

भूय एव महाबाहो शृणु मे परमं वचः।
यत्तेहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥१॥

॥ टीका ॥

यत्पूर्वं स्त्रियो वैश्यास्तथा शूद्रा इत्यादिवाक्यद्वारा निजभक्तियोगं वर्णितं तद्भक्तानां विज्ञापनार्थं विभूति योगसङ्गात् निजतत्वं दर्शयति न मे इति ॥ १ ॥

॥ श्लोकः ॥

न मे विदुः सुरगणाः प्रभावं न महर्षयः।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥२॥

॥ टीका ॥

मे प्रभावं सुरगणा न विदुर्महर्षयोपि न विदुः तत्कारणमाह किन्तु देवानां महर्षीणां च आदिभूतोहं

यथा पुत्राःप्रपितामहादिपूर्वपुरुषाणां गुणरूपादिप्रभावं न जानन्ति तद्वत् मामपि न जानन्तीत्यर्थः ॥ २ ॥

न केवलं पूर्वपुरुषवत् ज्ञेयं तदाह—यो मामिति—

॥ श्लोकः ॥

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥३॥

॥ टीका ॥

यः पुरुषः मां अजं अजन्मा मद्व्यतिरिक्त आदौ अन्यो नास्तीति अनादिमहेश्वरं ईश्वराणामपि ईश्वरं वेत्ति स पुरुषः असंमूढः अभिमानरहितो भवति अत एव सर्वपापैः प्रमुच्यते ॥ ३ ॥

तद्विज्ञापनहेतुमाह—बुद्धिरिति—

॥ श्लोकः ॥

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवोभावो भयं चाभयमेव च ॥४॥
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥५॥
महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥६॥

॥ टीका ॥

मद्भावनायुक्तपुरुषाणां मनसः शकाशात् बुद्धिर्विवेकवती भवति तथा तत्वविवेकरूपं ज्ञानं भवति असंमोहं नाम मम स्मरणाद्विस्मरणं न भवति क्षमावान्भवति सत्ये स्थितिर्भवति दमनाम इन्द्रियानिग्रहणे समर्थो भवति शमनाम मननिग्रहणे समर्थो भवति मम स्मरणयुक्तः सुखं प्राप्नोति विस्मरणहेतु दुःखं भवति भवस्य अभावो भवति अर्थात् प्रपञ्चरहिता बुद्धिर्भवति अविस्मरणहेतुभयं भवति मृत्युपक्षे अभयं भवति अहिंसानाम वैरबुद्धिरहितो भवति अर्थात् समबुद्धिर्भवति तुष्टिसन्तोषवान् तपः सहनशीलो भवति दानं अन्यस्य अभयदाता भवति यशवान् भवति अपयशरहितो भवति भूतानां मद्भावनायुक्तपुरुषाणां एते पूर्वोक्ताः पृथग्विधाः भावाः मत्त एव भवन्ति अर्थादेते सद्भावाः मत्शकाशादेव भवन्ति तत्प्रत्यक्षेण दर्शयइति। महर्षयति अर्थात् ब्रह्मणोपि मद्भावनायुक्तस्य मनसः शकाशात् सप्तमहर्षयः स्वयंभूमनुशनकादयश्च जाता उत्पतिभूताः तेषां इमाः प्रजाः स्युः तस्मात् सर्वे एव मद्विभूतिरूपाः ज्ञेयाः ॥४॥५॥६॥

अथोक्तविभूतिमाहात्म्यमाह—एतामिति—

॥ श्लोकः ॥

एतां विभूतिं योगं च मम यो वेत्ति तत्वतः ।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥७॥

॥ टीका ॥

तत्वविचारसञ्ज्ञात् मम विभूतिं योगं च यो वेत्ति स अविकंपेन अपृथग्भावेन मां युज्यते इत्यर्थः ॥७॥

बुद्धिवतां विवेकमाह—अहमिति—

॥ श्लोकः ॥

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥८॥

॥ टीका ॥

अहं सर्वस्य प्रभवः परमकारणरूपोहं मदीयस्थाने सर्वं भ्रमति सर्वगतरूपत्वात् तद्यथाह श्रुतिः "आधारमानन्दमखण्डरूपं यस्मिन् लयं यान्ति पुरत्रयं च" इति तस्मादाह—इति मत्वा बुधा विवेकयुक्ताः प्रेमसमन्विता मां भजन्ते ॥ ८ ॥

तद्विशेषमाह—मच्चित्तेति—

॥ श्लोकः ॥

मच्चिता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च॥९॥

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
दृदामि बुद्धियोगं तं येन मामुपयान्ति ते ॥१०॥

॥ टीका ॥

मच्चित्ता मत्स्थाने स्मृतिवृत्तयः मद्गतप्राणाधारेण जीवन्ति ते पुरुषाः परस्परं बोधयन्तः कथयन्तः सन्तः रमन्ति ॥ ९ ॥ तेषां बुद्धियोगं ददामि येन ते मां प्राप्नुवन्ति इत्यर्थः ॥ १० ॥

अथ पराऽपराउभयप्रकृतीद्वारा सृष्टिर्भवति इति पूर्वोक्तं तदत्र मनबुद्ध्यादिप्रति उपदेशं कृत्वा इदानीं जीवात्मानम् प्रति उपदेशं करोति । तेषामिति—

॥ श्लोकः ॥

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥११॥

॥ टीका ॥

उक्तजीवभूता प्रकृतिः अहङ्कारद्वारा पृथक् अभिमानेन बहुधा भवति तेषां निजशरणप्राप्त्यर्थं अहं भावं अज्ञानं नाशयामि ज्ञानदीपेन आत्माश्रये स्थापयामि भिन्नभावं निवारयामि ॥ ११ ॥

श्रीकृष्णस्योक्तमिदमुपदेशं श्रुत्वा अर्जुनः पृच्छति—

अर्जुनउवाच—श्लोकः ।

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२॥

॥ टीका ॥

यद्वेदरूपं शब्दब्रह्म स एव छन्दांसिरूपेण बहुधा भवति तथा च यदक्षरं ब्रह्म सोपि अहङ्कारं गृहीत्वा पृथगभिमानीरूपेण बहुधा भवति अतएव त्वं कैवल्यरूपेण वर्तितः सन् त्वमेव परं ब्रह्म उक्तउभयोर्ब्रह्मयोः आश्रयरूपत्वात् त्वमेव परं धाम तथा त्वमहं इति द्विधाभावरहितत्वात् त्वमेव परमं पवित्रं । उक्तजीवबुद्ध्यादयस्त्रिपुन्नपुंसकानि भवन्ति त्वं जन्ममरणरहितत्वात् शाश्वतं पुरुषं त्वमेव वाणी नियंतृत्वाद्दिव्यं दीप्तरूपं आदिभूतं मृत्युञ्जयं तं विभुं सर्वव्यापकमिति । अथोक्तवाक्यं ऋषिवाक्येन प्रमाणयति ऋषय आहुरित्यादि ॥ १२ ॥

॥ श्लोकः ॥

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे॥ १३॥
सर्वमेतदृतमन्ये यन्मां वदसि केशव ।
न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः॥ १४॥

स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥

॥ टीका ॥

एतत् ऋष्युक्तं किंच तमीश्वरं विभुं च न जानीमः त्वमपि वदसि किंच मां कोपि न वेत्ति एतदुक्तं वाक्यं अहं सत्यं मन्ये अतएव स्वयमेवात्मानं स्वयमेव वेत्थ जानासि इत्यर्थः ॥ १३ ॥ १४ ॥ १५ ॥

॥ श्लोकः ॥

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥

॥ टीका ॥

अतएवात्मविभूतयः दिव्याः अशेषेण त्वमेव वक्तुमर्हसि याभिर्विभूतिभिरिमाल्लोँकान् व्याप्य तिष्ठसि इत्यर्थः ॥ १६ ॥

तद्विशेषेण प्रश्नं पृच्छति—

॥ श्लोकः ॥

कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योसि भगवन्मया ॥१७॥
विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥

॥ टीका ॥

त्वां सदा परिचिन्तयन्सन् अहं कथं जानीयां हे योगिन्नाम हे योगमायापते केषु केषु भावेषु नाम स्थानेषु मया चिन्त्यः नाम विचारणीयस्त्वं ॥ १७ ॥
आत्मनो योगं विभूतिं भूयो विस्तरेण कथय तवामृतं यशः शृण्वतोपि मे तृप्तिर्नास्ति अतएव भूयः कथय इत्यर्थः ॥ १८ ॥

तदुत्तरं—श्रीभगवानुवाच—श्लोकः ।

॥ श्लोकः ॥

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे।१९।

॥ टीका ॥

हे कुरुश्रेष्ठ हन्तानन्दे आत्मविभूतयः प्राधान्यतः नाम ईश्वरत्वविभूतयः तुभ्यं कथयिष्यामि विस्तरस्य मे अन्तो न विद्यते स्वतन्त्ररूपत्वात् ॥ १९ ॥
यदर्जुनोक्तं सदा त्वां कथं चिन्तयामिं तदुत्तरमाह—

॥ श्लोकः ॥

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यश्च भूतानामन्त एव च ॥२०॥

॥ टीका ॥

अहमात्मा नाम अहं कैवल्यरूपपरमात्मा तदेव दर्शयन् अहं आदिरहं मध्यः अन्त्येपि अहं यथा सुवर्णभूषणेषु तथा श्रुतिःसर्वंखल्विदं ब्रह्म इति ॥ २० ॥

यदा केषु केषु भावेषु चिन्तयन् एवमर्जुनप्रश्नोत्तरस्वेश्वरत्वविभूतिं दर्शयन्नाह—

॥ श्लोकः ॥

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥२१॥
वेदानां सामवेदोस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥
रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसां ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम्॥२३॥
पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः॥२४॥
महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोस्मि स्थावराणां हिमालयः ॥
अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः॥२६॥

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥२७॥
आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥
अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥२९॥
प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोहं वैनतेयश्च पक्षिणाम्॥३०॥
पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥
सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥
अक्षराणामकारोस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥३३॥
मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा॥
बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोहमृतूनां कुसुमाकरः ॥३५॥

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोस्मि व्यवसायोस्मि सत्वं सत्ववतामहम् ॥
वृष्णीनां वासुदेवोस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥३७॥
दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥
यच्चापि सर्वभूतानां वीजं तदहमर्जुन ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥
नान्तोस्ति मम दिव्यानां विभूतीनां परंतप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥४०॥
यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम् ॥४१॥
अथवा वहुनैतेन किं ज्ञातेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥

॥ टीका ॥

सर्वं सुगममेव ।

इति श्रीमद्भगवद्गीताटीकायां श्रीपुरुषोत्तमदासकृतायां दशमोऽध्यायः ॥ १० ॥

अथोक्तविभूतियोगं श्रुत्वा अर्जुनः पृच्छति—

अर्जुन उवाच—श्लोकः।

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम्।
यत्त्वयोक्तं वचस्तेन मोहोयं विगतो मम ॥ १ ॥

॥ टीका ॥

अध्यात्मं यत्त्वया अहमात्मेति सुवर्णवदुक्तं तच्छ्रुत्वा मदीयमोहं तवममादिभेदं गतं इत्यर्थः ॥ १ ॥

इदानीं विभूतिंप्रति आह—भवेति—

॥ श्लोकः ॥

भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥२॥

॥ टीका ॥

उक्तविभूतिभवाप्ययरूपा अर्थात् कार्यरूपा तथा तव माहात्म्यं अव्ययं कारणरूपं एतयद्वं मया वि-स्तरतः श्रुतम् ॥ २ ॥

इदानीं तत्कार्यकारणरूपं विस्तरेण पृच्छति। एवमिति।

॥ श्लोकः ॥

एवमेतद्यथात्थ त्वमात्मानं परमेश्वर।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥

॥ टीका ॥

एवमिति यथा सप्तमाध्याये उक्तं यो यो यां यां तनुं भक्त इति अर्थात् पृथक् पृथक् मन्त्रद्वारा पृथक् पृथक् देवान् ये ये पुरुषा आराधयन्ति तत्राराधने श्रद्धारूपो त्वमेव देवस्थानेषु फलदाता त्वमेवेति तथा यदाह अष्टमे ओमित्येकाक्षरं ब्रह्मेति अर्थात् अन्तकाले एकाक्षरं मन्त्रप्रणवरूपं स्मरन्सन् त्वां प्राप्यते तत्रैव यदाह कविं पुराणमिति अर्थात् तत्प्रणवद्वारा विविधमन्त्राणां रचनाकर्ता त्वमेव स एव कविं आदित्यवत् तमसः परस्तात् अर्थात् अव्यक्तावस्थात् पर एव तदेवाह सप्तमे वेदाहंसमतीतानि इत्यादि अतएव यत्त्रिकालज्ञज्ञानयुक्तं तव स्वरूपं यमन्ये न जानन्ति तदेवस्वरूपं अहं द्रष्टुमिच्छामि ॥ ३ ॥ यदि शक्यं यद्यहं दर्शनेऽधिकारी तर्हि त्वं दर्शयेति भावः ॥४॥

इत्यर्जुनप्रश्नं श्रुत्वा भक्तवत्सलःश्रीकृष्णभक्तानुग्रहार्थे आह—

श्रीभगवानुवाच—श्लोकः।

पश्य मे पार्थ रूपाणि शतशोथ सहस्रशः।
नानाविधानि दिव्यानि नानावर्णाकृतानि च ॥५॥

॥ टीका ॥

शतशः सहस्रशः शतसहस्रादधिकादपि अधिकानि मे अनन्तरूपाणि पश्य इत्यर्थः ॥ ५ ॥

तदनन्तरूपमाह—पश्येति—

॥ श्लोकः ॥

पश्यादित्यान् वसून् रुद्रानऽश्विनौ मरुतस्तथा।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६ ॥

॥ टीका ॥

पश्यादित्यानिति वचनेन अनिमिषारूप स्वर्गनिवासिदेवानां रूपं न मन्तव्यं अतएवाह अदृष्टपूर्वाणि अर्थात् ये वेदशास्त्रेपि न दृष्टाः राशिग्रहरूपा ये न श्रुताः तान् पश्य इत्यर्थः ॥ ६ ॥

तदेवाह—इहेति—

॥ श्लोकः ॥

इहैकस्थं जगत्कृत्स्नं पश्याद्य स चराचरम् ।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥

॥ टीका ॥

इहनाम यत् पृथक् चेष्टा तदेव एकस्थं नाना गतिरहितं एकरूपं सचराचरं नाम चराचराणां बीजरूपं यदव्यक्तं यथा 'सर्वयोनिषु च कौन्तेय मूर्त्तयः संभव-

न्ति याः' इति स एव जन्ममरणहेतु अव्यक्तावस्थारूपं अव्यक्ताद्व्यक्तयः सर्व इति वचनात् यच्चान्यदिति अन्य ब्रह्माण्डादि द्रष्टुमिच्छसि तर्हि अनेकब्रह्माण्डबीजरूपं अव्यक्तावस्थां पश्य अर्थात् महदादिसप्तावरणयुक्तानि ब्रह्माण्डानि अव्यक्ताव्यक्तबो भवन्ति इत्यर्थः ॥

तद्दर्शनहेतु चक्षु आह—न तु मां शक्यसे इति—

॥ श्लोकः ॥

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥८॥

॥ टीका ॥

उक्तव्यक्ताव्यक्तगतिर्जीवस्यैव न तु परमेश्वरस्य त्रिकालज्ञत्वात् किन्तु स व्यक्ताव्यक्तयोर्द्रष्टृरूपो ज्ञेयः अतएवाह अनेन चक्षुषा द्रष्टुं न शक्यते तस्माद्दिव्यं चक्षु ददामि दिव्यं नाम निष्कामनारूपं मम भक्तियुक्तप्रेमाश्रुप्लुतचक्षुद्वारा योगमैश्वरं ऐश्वरस्य निपुणत्वमित्यर्थः ॥ ८ ॥

एतदेव सञ्जयो धृतराष्ट्रं प्रति आह—एवमुक्त्वेति—

॥ श्लोकः ॥

एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥

॥ टीका ॥

ईश्वरकृतं परमोत्कृष्टं रूपं इत्यर्थः ॥ ६ ॥

तदेवरूपमाह—अनेकेति—

॥ श्लोकः ॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥१०॥
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्य्यमयं देवमनन्तं विश्वतोमुखम् ॥११॥

॥ टीका ॥

अर्थात् सर्वदेवमयं विश्वरूपम् ते सर्वे मन्त्रमयदेवताः न तु स्वर्गस्थाः दिक्पालरूपिणः तस्मादाह देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः अतएव मन्त्रमयादेवाः छन्दांसि रूपाः ते वेदा अपि परमेश्वरस्य निर्मिता न तु ब्रह्मणः तेनेदंब्रह्मेत्यादिप्रमाणेन यथा वेदमन्त्रद्वारा देवाः प्रसिद्ध्यन्ति यथा मन्त्रे कल्पितं तथैव रूपं प्रत्यक्षं भवति यद्यथा "एकदन्तं चतुर्भुजं पाशमङ्कुशधारिणम् । रक्तं लम्बोदरं शूर्पकर्णिकं रक्तवाससम् ॥ रक्तचन्दनलिप्ताङ्गं रक्तपुष्पैः सुपूजितम् । भक्त्यानुकम्पितं देवं जगत्कारणमच्युतम् ॥ आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् ।" उक्तप्रकारेण सर्वमन्त्रद्वारा पृ-

थक् देवस्थानेषु प्रकृते पुरुषात्परं कैवल्यरूपं आविर्भूतं भवति अतएव पृथक् मन्त्ररूपान् पृथक् देवान् दर्शयत् अर्थात् यन्मन्त्रे यद्देवस्य यथा स्वरूपं वर्णितं तथैव स्वरूपेण दृश्यन्ते तदुक्तं "यस्य देवस्य यद्रूपं तथा भूषणवाहनमिति" अतएवाह अनेकवक्त्रनयनमित्यादि विश्वतोमुखम् सर्वतः पाणिपादान्तसर्वतोक्षिशिरोमुख इत्यर्थः ॥ ११ ॥

अथोक्तभगवतः शुद्धसत्वस्वरूपस्य विशेषणमाह—

दिवि इति—

॥ श्लोकः ॥

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः शदृशी सा स्याद्भासस्तस्य महात्मनः ॥
तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तथा ॥ १३ ॥

॥ टीका ॥

दिवि स्वर्गे सहस्रसूर्यादपि अधिकप्रकाशको रूपः अर्थात् शुद्धसत्वमयस्वरूपं अतिप्रकाशं श्रीकृष्णस्य शरीरे अर्जुनोऽपश्यत् अथ शुद्धसत्वस्य व्यक्ताव्यक्तगतिं दृष्टान्तेनाह—

॥ दोहा ॥

प्रगटत छपत ज्ञान हरि कौतुक करत विहार ।
व्यक्ताव्यक्त पावक इव कविजन करत बिचार ॥ १ ॥
पर्वत अनल सुवर्ण करि बड़वादाहक नीर ।
जाठरानल असु पोषकत स गुह्यश्रुतीश्वर सीर ॥
प्रगट अनल रविकिरण कर वरषि २ धरि नीर ।
तस भक्तनेह नीर लहि क्रीड़तहीं यदुवीर ॥ ३ ॥
शुद्धाशुद्धो ज्ञान गहि कौतुक करत विभिन्न ।
कहत सुनत विचारतहिँ मति न होइ परिछिन्न ॥
शुद्ध सत्वज्ञान नीलमणि व्यक्ताव्यक्त समान ।
रविशशि अनल मलीनहीँ भेद सत्य गुणज्ञान ॥
रविप्रकाश सत्यगुण भ्रमरकाज रज जान ।
भेद ऋतु उत्पत्ति करि कीरण नल तम मान ॥ ६ ॥
शशि वर्षहिँ सुधार रति कान्ति सत्वगुण ज्ञान ।
हृदय दीषत स्याम जोइ सोइ तमोगुण खानि ॥
पावक भांति सत्य गुण दाहक रज परधान ।
सुषुप्ति इव गुप्त होईं सोईं तमोगुण निधान ॥ ८ ॥
शुद्ध सत्वज्ञान नीलमणि व्यक्ताव्यक्त है साम ।
कृष्णचन्द्र परमात्मा अन्तर्यामी धाम ॥ ९ ॥

व्यक्ताव्यक्त ज्ञान गहि कौतुक करत विभिन्न ।
कहत सुनत विचारतहिँ मति न होइ परि छिन्न ॥

अतएव सूर्योपि मलीनसत्व एवं तस्मात् शुद्धसत्वस्य निर्मलत्वात् कोटिसूर्यशदृशी आभा कथिता ॥

तत्र शुद्धसत्वमयशरीरे एकस्थं शुद्धसत्वमिश्रितं प्रविभक्तं स्थावरजंगमरूपं जगत्कृत्स्नं जवेन गच्छतीति जगत् अर्थात् गतिमन्तं उत्पत्तिलयरूपं सर्वं अपश्यदित्यर्थः ॥ १३ ॥

अथ तत्स्वरूपदर्शने अर्जुनस्य लक्षणमाह—तत इति ।

॥ श्लोकः ॥

ततः सविस्मयाविष्टो हृष्टरोमा धनञ्जयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥१४॥

॥ टीका ॥

तद्रूपं दृष्ट्वा कृताञ्जलिर्भूत्वा स्तुतिं चकार पश्यामीति—

अर्जुन उवाच—श्लोकः ।

पश्यामि देवाँस्तव देव देहे
सर्वांस्तथा भूतविशेषसंघान् ।
ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्वानुरगांश्च दिव्यान् ॥१५॥

॥ टीका ॥

छन्दांसि रूपान् देवान् सर्वान् तथाभूतान् अपि पश्यामि च पुनः वहिस्थानापि ब्रह्मादि देवान् छायावत् तव देहे पश्यामि तदृष्टान्तमाह—यथा दर्पणादौ मुखादिदर्शनं भवति तद्वत् ॥ १५ ॥

तदेव अन्तर्वाहिः पूर्णरूपत्वमाह—अनेकेति—

॥ श्लोकः ॥

अनेकवाह्वोदरवक्त्रनेत्रम्
पश्यामि त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वरविश्वरूपम् ॥१६॥

॥ टीका ॥

अन्तररूपत्वात् मन्त्ररूपदेवानां वाह्वादिअङ्गाकारारूपं त्वमेव वहिःरूपत्वात् ब्रह्मादिवाह्यदेवानामपि वाह्वाद्यङ्गाकाररूपं त्वमेव अतएव उक्तं अनेकवाहुरित्यादि तस्मात् सर्वगतं रूपं आदिमध्यान्तहीनं पश्यामि ॥

तस्मादेवाह—करीटिनमिति—

॥ श्लोकः ॥

करीटिनङ्गदिनं चक्रिणं च
तेजोराशिं सर्वतो दीप्तमन्तम् ।

पश्यामि त्वां दुर्निरीक्ष्यं समन्ता-
द्दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥

॥ टीका ॥

अन्तर्देवानां यत् उपासकानां भावनीयरूपं भूषणं वर्हिर्देवानां यन्मणिरत्नादिभूषणं तानि सर्वभूषणानि त्वयि एव दृश्यन्ते मन्त्रमयज्योतिर्मणिमयज्योति उभयज्योतियुक्तस्य भूषणस्य दर्शनं दुर्निरीक्ष्यं भवति यथा दर्पणादिमणिस्थाने सूर्यकिरणसङ्गात् उभयज्योतिर्नेत्रे दुर्निरीक्ष्यं भवति तद्वदित्यर्थः ॥१७॥

तदेव सर्वत्रपूर्णरूपं दर्शयति—त्वमिति—

॥ श्लोकः ॥

त्वमक्षरं परमं वेदितव्यम्
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता ।
सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥

॥ टीका ॥

अक्षरं नाम क्षररहितं आकाशवद्बाहिरन्तः पूर्णरूपं परमं परमईश्वरं अतएव त्वमेव वेदितव्यं विश्वस्य परमकारणरूप अव्यय नाम असाधारणकारणरूपं यथा वीजवृक्षयोः भूमिः धर्मस्य वर्णाश्रमरूपं यद्धर्मं

साधारणधर्मं भगवद्भक्तियुक्तं यद्भागवद्धर्मं तत्परमं धर्मं इत्यादि सर्वधर्मस्य रक्षा कर्ता त्वमेव स्यात् अत एव सनातनः पुरुषः त्वं जन्मादिरहित इति मे मदीयमतमित्यर्थः ॥ १८ ॥

तदेव सनातनं दर्शयति—अनादीति—

॥ श्लोकः ॥

अनादिमध्यान्तमनन्तवीर्य-
मनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रम्
स्वतेजसा विश्वमिदं तपन्तम् ॥१९॥

॥ टीका ॥

आदिमध्यान्तशून्यं अनन्तवीर्य्यं अनन्तपराक्रमं तस्मादनन्तबाहुं अनन्तपराक्रमत्वात् यथा शशिसूर्यौ दिवारात्रिप्रकाशकौ तथा त्वं सर्वस्य बहिरन्तरप्रकाशकः हुताशवक्त्रं सर्वयज्ञभोक्तारूपं फलदायिकत्वात् उक्तअग्निवागीन्द्रियाधिष्ठातृत्वात्त्वमेव चत्वारिवाक्प्रेरकरूपेण विश्वतपंतं विश्वप्रकाशकरूपं त्वमेवेत्यर्थः ॥

तद्वागीन्द्रियनियन्तारूपं विशेषेण दर्शयति। द्यावेति—

॥ श्लोकः ॥

द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः ।

दृष्ट्वाद्भुतं रूपमुग्रन्तवेदम्
लोकत्रयं प्रव्यथितं महात्मन् ॥२०॥

॥ टीका ॥

द्यावापृथिव्योः भूमिस्वर्गयोर्यदन्तरन्तत्त्वयैकेन व्याप्तं सर्वेषां वाणीनियंतृत्वात् अतएव दिक्देश-भेदे जातिभेदे वा पृथक् पृथक् वाणी प्रकाशकरूपः त्वमेव वागीन्द्रियाणां यत् सुखमनाम्निरूपा नाडी त-दुत्तरे ईडादक्षिणे पिङ्गला तत्र ईडानाम सूर्यनाडीद्वारा देशभेदे वादं कृतं पिङ्गलाचन्द्रनाडीद्वारा जातिभेदे-वाणीकृतं एवं भूतं तव अद्भुतं रूपं दृष्ट्वा लोकत्रयं व्यथितं अर्थात्तत्सिद्धान्तकरणेन समर्था भवन्ति ॥२०॥

तद्वावाणीलक्षणमाह—अमीति—

॥ श्लोकः ॥

अमीहि त्वां सुरसंघा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥२१॥

॥ टीका ॥

अमी हि वाणीं गृहीत्वा देवाः त्वामेव प्राप्नुवन्ति तद्वेदे भयानकवाणीं श्रुत्वा कृताञ्जलयः त्वामेव स्तु-

वन्ति ततः महर्षयोपि त्वामेव वाणीनियन्तारं ज्ञात्वा स्वस्तिवचनेन बहुभिस्तुतिभिः स्तुवन्ति ॥ २१ ॥

उक्तप्रकारेण भिन्नभिन्न छन्दांसिरूप ऋषीणां सेव्य एकएव परमेश्वर इति निरूपितः, इदानीं तच्छन्दास्यधीनदेवानां लक्षणमाह—रुद्रेति—

॥ श्लोकः ॥

रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षाः सुरसिद्धसंघा
वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥२२॥

॥ टीका ॥

उक्तरुद्रादयः सर्वे देवा यज्ञभोक्तारः तत यज्ञफलदायिका अपि भवन्ति तेपि त्वां दृष्ट्वा विस्मिता भवन्ति अर्थात् अन्तर्यामिनियन्तारूपेण सर्वयज्ञानां भोक्ता फलदाता त्वमेव इति ज्ञात्वा विस्मिता भवन्तीत्यर्थः ॥ २२ ॥

अथोक्तसर्वदेवानां अन्तर्यामिनियन्तारूपं दर्शयति । रूपमिति—

॥ श्लोकः ॥

रूपं महत्ते वहुवक्त्रनेत्रम्
महाबाहो बहुबाहूरुपादम् ।

बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥२३॥

॥ टीका ॥

अन्तर्यामिनीयन्तारूपेण सर्वमयत्वात् बहुअङ्गयुक्तं रूपं कथितं यत्पूर्वदशमे कालः कालयतामहं इति वाक्ये विभूतिरूपं कालं कथितं तत्कालस्य कालत्वं बहुदंष्ट्रा करालमिति दर्शयन् उक्तविभूतिरूपं कालं मलीनसत्वात्मकं संसृतिदायकं शुद्धसत्वात्मकं कालं मुक्तिदायिकं इति ज्ञात्वा लोकाः प्रव्यथिता अर्थात्तव स्मरणाद्विस्मृताः सन्ताः निजमन्दं भाग्यं ज्ञात्वा प्रव्यथिताः दुखिताः तथाहमपि सामान्यरूपं ज्ञात्वा यत् रथादिषु नियोजितवान् तत् स्मरणं कृत्वाहमपि व्यथितः ॥

यथा वर्षात्मकं कालं आब्रह्मपर्य्यन्तं व्याप्तं तथा त्रिकालज्ञज्ञानयुक्तमपि सर्वव्याप्तं दर्शयति । नभोति—

॥ श्लोकः ॥

नभस्पृशं दीप्तमनेकवर्णम्
व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमं च विष्णो ॥२४॥

॥ टीका ॥

अनेकवर्णं नाम अनेकभक्तानां पृथग्भावनीयरूपं व्यात्ताननं नाम अति उदाररूपम् यथा तथा स्मरणेऽपि शुभफलदायकं अर्थाद्वैरीणामपि मुक्तिदायकं तदेवाह, दीप्तविशालनेत्रं समदर्शिनं एवं भूतं दृष्ट्वा यन्मयाप्रथमाऽज्ञातरूपेण सेवास्मरणादिकं न कृतं तत् स्मृत्वा व्यथितात्मा सन् धृतिं शान्ति न प्राप्नोति ॥२४॥

उक्तवर्षात्मककालात् दुरन्तरूपं दर्शयति। दंष्ट्रेति—

॥ श्लोकः ॥

दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसन्निभानि ।
दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥ २५ ॥

॥ टीका ॥

कालस्य अनलकालस्यापि कालरूपाणि ते दंष्ट्राकरालानि अत्यन्तप्रकाशकत्वात् उदयाचलरूपादिशाविदिशादिभेदरहितं रूपं दृष्ट्वा शर्म न लभे मद्भयं न गच्छति अतएव हे जगन्निवास अनेकजगतां आश्रयरूपः त्वं प्रसन्नो भवेत्यर्थः ॥ २५ ॥

इदानीं श्रीकृष्णस्य पूर्वनिर्मितं कर्ममाह—

॥ श्लोकः ॥

अमी च त्वां धृतराष्ट्रस्य पुत्राः
सर्वे सहैवाऽवनिपालसंघैः ।
भीष्मो द्रोणः सूतपुत्रस्तथासौ
सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥

॥ टीका ॥

श्रीपरमेश्वरस्य यानि लीलारूपाणि कर्माणि आगामिकाले कर्तव्यानि तानि पूर्वमेव निर्मितानि स्युः प्रमाणं—होइहै सोइ जो राम रचि राखा । को करि तर्क बढ़ावै साखा ॥ इति सत्पुरुषवचनं अर्थात् त्रिकालज्ञत्वात् सर्वकर्तव्यं पूर्वमेव निर्मायति ॥ २६ ॥ इदानीं सर्वेषां सद्गतिदायकत्वं दर्शयति । वक्त्राणीति—

॥ श्लोकः ॥

वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥

॥ टीका ॥

दंष्ट्राकरालानि अर्थात् शिवब्रह्मादिदत्तवरोन्मत्तानां हिरण्यकशिपुआदीनापि ते दंष्ट्रानि चूर्ण-

यन्ति तत्रापि यत्प्रह्लादीनां रक्षां करोति तदेव दंष्ट्राविलग्ना इति दर्शयतीत्यर्थः ॥ २७ ॥

इदानीं मुमुक्षूणां मुक्तिदायकत्वं दर्शयति। यथेति—

॥ श्लोकः ॥

यथा नदीनां बहवोऽनुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभिविज्वलन्ति ॥२८॥

॥ टीका ॥

यथा नद्यः निजनामरूपं विहाय समुद्रे लीनाः भवन्ति तथानुभवस्वरूपक्षेत्रज्ञरूपं जीवात्मा कल्पितनाम रूपादिकं त्यक्त्वा त्वामेव विशन्ति प्रकाशकरूपा भवन्तीत्यर्थः ॥ २८ ॥

इदानीं योगेश्वराणां गतिदायकत्वमाह—यथेति—

॥ श्लोकः ॥

यथा प्रदीप्तं ज्वलनं पतङ्गा
विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोका-
स्तवापि वक्त्राणि समृद्धवेगाः ॥२९॥

॥ टीका ॥

अर्थात् अष्टाङ्गयोगसाधनरूपा यत्समृद्धिः तत् योगोत्थिताग्नौ देहं दाहयित्वा त्वामेव विशन्तीत्यर्थः ॥

इदानीं वर्णाश्रमादिकर्मणां गतिदायकत्वमाह—

॥ श्लोकः ॥

लेलिह्यसे ग्रसमानः समन्तात्
लोकान्समग्रान् वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य्य जगत्समग्रम्
भासस्तवोग्राः प्रतपन्ति विष्णो ॥३०॥

॥ टीका ॥

यथा जिह्वा पृथग्रसादिकं बोधयति तथान्तर्यामिरूपेण सर्वकर्मणां साक्षीरूपत्वात्पृथक् पृथक् फलदायको भवति तेजोभिरिति शुद्धसत्वमयः तेजः यथा पूर्वमाह दिविसूर्यसहस्रस्येति ॥ ३० ॥

तत्त्रिकालज्ज्ञानयुक्तं तेजोमयरूपं पुनरेवाह—

आख्याहीति—

॥ श्लोकः ॥

आख्याहि मे को भवानुग्ररूपो
नमोस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यम्
न हि प्रजानामि तव प्रवृत्तिम् ॥३१॥

॥ टीका ॥

एको नाम भवतः कैवल्यं अर्थात् त्रिकालज्ज्ञानसज्ञाद् सद्रूपं निरभिमानी शुद्धजीवात्मनः सज्ञाच्चिद्रूपं तदुभययुक्तं तव परमानन्दस्वरूपं एक एव सच्चिदानन्दाख्यानं स एव उग्रं रूपं परमोत्कृष्टं रूपं किन्तु दैत्यानां उग्ररूपेण दृश्यति अतस्तुभ्यं नमस्त्वं प्रसीद तव मनुष्यादिरूपधारणे यत् प्रवृत्तिः तामहं न जानामि अतस्तद्विज्ञानहेतुं पृच्छामि ॥ ३१ ॥

इत्यर्जुनप्रश्नस्योत्तरमाह—

श्रीभगवानुवाच—श्लोकः।

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो
लोकान्समाहर्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥३२॥

॥ टीका ॥

लोकक्षयकृत् उत्पत्तिः पालनसंहारकृत् प्रवृद्धकालोस्मि पुरातनः सर्वदा त्रैकालज्ञरूपः इदानीं आसुरीयलोकान् हर्तुं मम प्रवृतिः अतएव त्वां विना अपि उभयपक्षस्था योधा न भविष्यन्ति ॥ ३२ ॥

अतएवाह—तस्मादिति—

॥ श्लोकः ॥

तस्मात्त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून् भुंक्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥३३॥

॥ टीका ॥

अनेन श्लोकेन त्रैकालज्ञत्वं दर्शयति मया एव पूर्वमध्यमोत्तरकालरूपिणा सृष्ट्युत्पत्तिस्थितिलयकारिणा आदिमध्यान्तकारिणा एते हता एव सन्ति इति ज्ञात्वोत्थित्य शत्रून् जित्वा राज्यं कुरु किन्तु मदीय उत्पत्त्यादिकर्मसु त्वं निमित्तमात्रं जाननीयं अत एव त्वं अहमभिमानी भूत्वा मुमूक्षुआदिवासनामात्रकरणीयं कस्मात् यदहङ्कारसङ्गात् नानात्वभासनात् तव रूपं भ्रष्टं भवति अतएव त्वं मत्परायणो भवेत्यर्थः ॥ ३३ ॥

॥ श्लोकः ॥

तदेवाह—द्रोणमिति—

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथान्यानपि योधवीरान् ।
मया हताँस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ॥ ३४ ॥

॥ टीका ॥

ममाज्ञानुसारेण साभिमानैर्जनैः सह त्वं युध्यस्व मदीयसहायेन त्वं जेतासीति भावः ॥ ३४ ॥

एतत्सर्वं सञ्जयो धृतराष्ट्रं प्रति आह—एतदिति—

॥ श्लोकः ॥

एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णम्
सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥

॥ टीका ॥

अभिमानद्वारा जीवात्मा नानात्वरूपेण निजस्वरूपाद्भ्रष्टो भवति एतद्भगवद्वचनं श्रुत्वा नमस्कृत्याह ॥

अर्जुन उवाच—श्लोकः ।

स्थाने हृषीकेश तव प्रकीर्त्या
जगत् प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसंघाः ॥ ३६ ॥

॥ टीका ॥

अर्थात् जीवरूपोऽर्जुनोपि भगवतः प्रकृतिः त्रिका-

ज्ञज्ञानोपि भगवतः प्रकृतिः तत्र जीवात्माऽनुभवस्व-रूपोस्ति त्रिकालज्ञज्ञानः परमचातुर्य्यः यद्वारा अनेक विचित्ररूपा वाणी रचयति उक्त उभौ परस्परमज्ञात-रूपौ यथा पृथक् ज्ञानीन्द्रियाणि पृथक् ज्ञाने वर्तिताः सन्तः अन्यस्य वृत्तिं अन्यो न जानाति तद्वज्जीवो त्रि-कालज्ञरूप प्रकृतिं न जानाति इदानीं भगवत्प्रसा-देन तां दृष्ट्वा स्तुतिमकरोत् तत्प्रकृतिद्वारा यच्छन्दांसि रचयति तच्छ्रुत्वा जगत् हृष्यति नाम आनन्दं प्रा-प्नोति तथा तद्बुद्ध्यादिनि चातुर्य्यरूपाणि त्रिकालज्ञ तत्स्थाने अनुरूपेण वर्तते यथा पूर्णचन्द्रस्थाने नक्ष-त्रादीनि मन्दभासं कुर्वन्ति तथारजस्तमादियुक्ता अ-सुरा रक्षांसि तत्प्रकृतेर्भयाद्दूरे पलायन्ते अर्थान्निज-वृत्तिविनाशकारीं ज्ञात्वा सिद्धसंघाः भगवत्परायणा देवर्ष्यादयः तत्प्रकृतिं दृष्ट्वा नमस्कुर्वन्तीत्यर्थः ॥३६॥

तन्नमनहेतुमाह—कस्मादिति—

॥ श्लोकः ॥

कस्माच्च ते न नमेरन्महात्मन्<br>
गरीयसे ब्रह्मणोप्यादिकर्त्रे ।<br>
अनन्त देवेश जगन्निवास<br>
त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥

॥ टीका ॥

हे परमात्मन् ते प्रकृतिं महात्मानः पुरुषाः कस्मात् न नमेरन् अर्थात् नमनीयमेव तत्कारणमाह—सृष्ट्यादौ ब्रह्मादित्रयदेवानां कर्तारूपः अर्थात् चतुर्वेदसङ्गात् चतुर्मुखो ब्रह्मा निर्मितः तथा वेदउपानिषद इति पञ्चविद्यायुक्तः पञ्चमुखः शिवो निर्मितः तथा त्रिकालज्ञानरूपं सुदर्शनं तथा समस्तवाणीखानिः ओङ्काररूप एव शंखयुक्तो विष्णुरूपो निर्मितः अतएव गरीयसी सर्वेषां पूज्योसीति भावः एवं भूता यस्य प्रकृतिः स एव त्वं सदसत्तत्परं अर्थात् त्रिकालज्ञानं सद्रूपं अहमभिमानयुक्तो जीवः असत् रूपः तदुक्तं यर्हि वाचमहिम्न स्वेति उक्तसत् रूप असत् रूप उभयप्रकृतीर्नियंतृत्वादाह—सदसत्तत्परं अतएव अक्षरं नाम कैवल्यस्वरूपं परमानन्दधाम स एव त्वं लीलाचरित्राणि करोषि अर्थात् त्रिकालज्ञानवानपि भक्ताङ्गने बालवद्विचरसि तथा निरभिमानी जीवस्य पतिरपिं पितापुत्रादिसम्बन्धं धारयसि इत्यर्थः ॥३७॥

तस्मादाह—त्वमादीति—

॥ श्लोकः ॥

त्वमादिदेवः पुरुषः पुराण-<br>
स्त्वमस्य विश्वस्य परं निधानम् ।

वेत्तासि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूप ॥ ३८ ॥

॥ टीका ॥

देवानां आदिरूपत्वात् त्वं आदिदेवः तथा महा-पौरुषकत्वात्पुरुषः सनातनः नियन्तारूपः सर्वजगता-माश्रयरूपं कैवल्यस्वरूपत्वादाह—वेत्तासि वेद्यं पर-मकारणरूपधाम त्वया सर्वविश्वं आततं नाम व्याप्तं अनन्तं मर्य्यादारहितमित्यर्थः ॥ ३८ ॥

उक्तकैवल्यतत्वं दर्शयति—वायुरिति—

॥ श्लोकः ॥

वायुर्यमोग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेस्तु सहस्रकृत्वः
पुनश्च भूयोपि नमो नमस्ते ॥ ३९ ॥

॥ टीका ॥

अर्थात्सर्वव्यापकं कैवल्यरूपं पुनः पुनः नमामि॥३९॥

तदेव पुनर्दर्शयति—नम इति—

॥ श्लोकः ॥

नमः पुरस्तादथ पृष्ठतस्ते
नमोस्तु ते सर्वत एव सर्व ।

अनन्तवीर्य्यामितविक्रमस्त्वम्
सर्वं समाप्नोषि ततोसि सर्वः ॥ ४० ॥

॥ टीका ॥

सुगममेव ॥ ४० ॥

इदानीं जीवेश्वरयोरनन्यभावं दर्शयति—सखेति—

॥ श्लोकः ॥

सखेति मत्वा प्रसभं यदुक्तम्
हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं
मया प्रमादात्प्रणयेन वापि ॥ ४१ ॥
यच्चापहासार्थमसत्कृतोसि
विहारशय्यासनभोजनेषु ।
एकोथवाप्यच्युत तत्समक्षं
तत्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥

॥ टीका ॥

अजानविषये अयं भावः यद्यपि जीवेश्वरयोरपरिछिन्नप्रसङ्गः तदपि यथा राहुः सूर्यस्य प्रभां चन्द्रस्य कान्तिमाच्छादयति तन्मण्डलनाच्छादयति तद्वत् विद्याऽविद्यायुक्तोहं जीवो भवति त्वं न भवसीति

एतत्तव महिमानं अजानता मया यद्दूरवद्ज्ञा हे कृष्ण हे यादव तथा पृथक् भावमतेन यत् हे सखेत्यादि अह्वानं कृतं प्रमादेन अहङ्कारावृतेन प्रणयेन वा प्रेम-युक्तेन अनादरं कृतं तत्सर्वं क्षम्यतामिति ॥ ४१ ॥

यच्च पुनः हासार्थं असन्मानं कृतं एकोथ नाम ए-कत्रभावेन समक्षं सन्मुखे दृष्टिगोचरेण यद्धासादि-कृतं तत् त्वामहं क्षामये अप्रमेयमित्यर्थः ॥ ४२ ॥

अथ क्षमाकरणे हेतुमाह—पितेति—

॥ श्लोकः ॥

पितासि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
नत्वत्समोस्त्यभ्यधिकः कुतोन्यो
लोकत्रयेप्यप्रतिमप्रभावः ॥ ४३ ॥
तस्मात् प्रणम्य प्रणिधाय कायम्
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुम् ॥४४॥

॥ टीका ॥

यत्सप्तमे जीवभूतापरा प्रकृतिः तदाशयेनाह प्रियः

प्रियाया इवेति भावः । त्वं लोकस्य पितासि तच्चतुर्दशे वक्ष्यति सर्वयोनिषु अहं वीजप्रदः पिता इति अन्यत्वत्समो नास्ति अधिकः कुतो भवति इति अर्जुनस्य गूढाभिप्रायं अर्थात् केचिद्देवं वदन्ति विद्योपाधिरीश्वरः अविद्योपाधिर्जीव इति तदेतत् श्रुतिप्रमाणेन न घटति यथाह—श्रुतिः सर्वस्य वशी सर्वस्यनियन्ता सर्वेश्वर इति तथान्ये केचिद्वदन्ति सोपाधिरीश्वरः निरुपाधिर्जीव इति एतदपि अनीश्वरवादित्वान्न घटति तत्रार्जुनआह—तस्मात्प्रणम्येति ॥४३॥ सुगमार्थः ॥ ४४ ॥

तत्सहनहेतुमाह—अदृष्टेति—

॥ श्लोकः ॥

अदृष्टपूर्वं हृषितोस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपम्
प्रसीद देवेश जगन्निवास ॥ ४५ ॥

॥ टीका ॥

वह्वायुधादियुक्तमेतद्रूपं दृष्ट्वा मे भयं भवति तदधुना मदीयमिष्टं देवरूपं दर्शय ॥ ४५ ॥

तदेव रूपमाह—किरीटिनमिति—

॥ श्लोकः ॥

किरीटिनङ्गदिनं चक्रिहस्त-

मिच्छामि त्वां द्रष्टुमहं तथैव ।

तेनैव रूपेण चतुर्भुजेन

सहस्रबाहो भव विश्वमूर्त्ते ॥ ४६ ॥

॥ टीका ॥

सर्वं सुगमार्थं ज्ञेयम् ॥ ४६ ॥

इत्यर्जुनेन प्रार्थितः श्रीभगवानुवाच—श्लोकः ।

मया प्रसन्नेन तवार्जुनेदम्

रूपं परं दर्शितमात्मयोगात् ।

तेजोमयं विश्वमनन्तमाद्यम्

यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥

॥ टीका ॥

इदं सर्वदेवमयं रूपं मया प्रसन्नेन त्वां दर्शितं आत्मयोगबलात् तेजोमयं शुद्धसत्यमयं अनेकविश्वमयं रूपं मलीनसत्वरूपं जगत् एतस्मात्पश्चाद्भवति तस्मात्पूर्वरूपं न दृश्यते, अत उक्तं त्वदन्येन न दृष्टपूर्वं अविद्यावरणयुक्तत्वान्न दृश्यते अतएव मया प्रसन्नेन त्वां दर्शितम् ॥ ४७ ॥

तस्य रूपस्यादर्शने कारणमाह—न वेदेति—

॥ श्लोकः ॥

न वेदयज्ञाध्ययनैर्न दानै-
र्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवं रूपः शक्य अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥
मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥

॥ टीका ॥

एवं रूपोहं वेदयज्ञादिकर्मभिः कश्चित्पुरुषो द्रष्टुं न शक्यः त्वां विना अर्थात् वेदा अपि पृथक् मन्त्रद्वारा पृथक् देवानामाराधनं वर्णयन्ति तस्मात्ते वेदादयः मम सर्वदेवमयस्वरूपं कथं ज्ञास्यन्ति अर्थात् वेदवर्णित-कर्मद्वारा मम रूपं न ज्ञायते ॥ ४८ ॥ अतएव त्वमपि मया दृष्टः इति अहं द्रष्टारूपेण विमूढभावं मा कुरु अत्रानन्दमयस्वरूप असुराणां भयदायके त्वं व्यथां मा कुरु तस्माद्भयं त्यक्त्वा प्रीतियुक्तः त्वं यद्रूपं द्रष्टुमिच्छसि तदेव पश्य ॥ ४९ ॥

इत्येवं भगवत्कर्तव्यं धृतराष्ट्रं प्रति सञ्जय उवाच—श्लोकः।

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनम्
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥

॥ टीका ॥

एवमुक्त्वा वासुदेवः सौम्यं मानुषं रूपं ददर्श ॥५०॥

तत्सौम्यरूपं दृष्ट्वा—अर्जुन उवाच—श्लोकः ।

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥५१॥

॥ टीका ॥

तवेदं रूपं दृष्ट्वा मे भययुक्ता साभिमानिनां भयकारिणी प्रकृतिः गता अर्थात्साभिमानरूपा प्रकृतिः गता ॥ ५१ ॥

एतद्वचनं श्रुत्वा—श्रीभगवानुवाच—श्लोकः ।

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः॥५२॥

॥ टीका ॥

देवा मलीनसत्वयुक्ताः साभिमानिनः तस्मादस्य रूपस्य निरभिमाननिष्कामशुद्धसत्यमयस्वरूपस्य दर्शने इच्छां कुर्वन्तीत्यर्थः ॥ ५२ ॥

तदेवाह—श्लोकः ।

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा ॥५३॥

॥ टीका ॥

अर्थात् तपोवेदादीनि साभिमानिनां कर्माणि अत एव ते तैः कर्मभिर्मां न प्राप्यन्तेति भावः ॥ ५३ ॥

अथ निरभिमानिनां लक्षणमाह—भक्त्येति—

॥ श्लोकः ॥

भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप ॥५४॥
मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥५५॥

॥ टीका ॥

तत्वविवेकेन अनन्यया भक्त्या मद्व्यतिरिक्तमन्यदेवं न पश्यन्तीति भावः ॥ ५४ ॥ सङ्गवर्जितः फलवासनारहितः मत्कर्मकृत् निर्वैरः आत्मवत् सर्वत्रात्मानं पश्यन् सन् कर्मसङ्गवर्जितः मद्भक्तः मामेव मां प्राप्नोतीत्यर्थः ॥ ५५ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीमत्परमवैष्णवश्रीपुरुषोत्तमदासकृतटीकायां श्रीकृष्णार्जुनसम्बादे विश्वरूपदर्शनयोगो नाम एकादशोऽध्यायः ॥ ११ ॥

श्रीकृष्णाय नमः ।

अथ उक्तभगवत्परायणमतं श्रुत्वा अर्जुनउवाच—श्लोकः ।

एवं सततयुक्ता ये भक्तास्त्वां पर्य्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

॥ टीका ॥

एवमुक्तप्रकारेण भगवत्परायणाः सन्तः त्वां सगुणरूपमुपासते तथा ये सोहमिति प्रकारेण ब्रह्मास्मीति अक्षरं अव्यक्तं निर्गुणं ब्रह्म उपासते तेषां उभयसगुणनिर्गुणतत्त्ववेत्तानां मध्ये के पुरुषा उत्तमा ज्ञेयाः ॥१॥

एतदुक्तप्रश्नस्य उत्तरमाह—श्रीभगवानुवाच—श्लोकः ।

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥

॥ टीका ॥

मयि चित्तं अवेश्य परया निष्कामया श्रद्धया युक्ता मां कैवल्यरूपमुपासते ते मयि युक्तौ उत्तमा मताः॥२॥

अथाक्षरोपासकानां लक्षणमाह—ये त्वक्षरमिति—

॥ श्लोकः ॥

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्य्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥

संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥४॥
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥५॥

॥ टीका ॥

अनिर्देश्य लक्षणं यद्द्वितीयाध्यायेन आह—विहाय कामान्यः सर्वान्पुमाँश्चरति निःस्पृहः । निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥ १ ॥ एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति । स्थित्वा स्यामन्तकालेपि ब्रह्मनिर्वाणमिच्छति ॥ २ ॥ तत्र कामान् विहाय बुद्धिनिर्वाणपदं प्राप्नोति अहं मम तां विहाय जीवात्मा निर्वाणं पदमाप्नोति तथाचोक्तं सप्तमाध्याये जीवभूतापरा प्रकृतिः बुद्ध्यादि अपरा प्रकृतिः एतदुभय प्रकृतिद्वारा सृष्टिर्भवति । तत्र द्वितीयाऽध्यायानुसारेण उभौ प्रकृतिः सृष्टेः पूर्वं निष्कामानिराभिमानयुक्त अनिर्देश्य रूपेण परे ब्रह्मणि लीनमासीत् तत्र परमानन्दस्वरूपस्य श्रीपरमात्मन यत् प्रियरूपा इच्छा तदधीने उभयप्रकृतिरस्ति तदिच्छया एव उभयप्रकृतिरंशद्वारा जगदुत्पद्यते तदीदानीं निष्कामना बुद्धिद्वारा सगुणोपासना कथिता स एव उत्तममता वर्णिताः

तथा यज्जीवात्मा साभिमानरूपेण देहवत् भवति त-
देहवद्भिः उक्तमनिर्देश्यं पदं दुष्करं प्राप्यते भगव-
दिच्छा व्यतिरिक्तस्वकृतज्ञानेन अभिमानेन अनिर्देश्या
रूपा अव्यक्तागतिर्न प्राप्यते ॥ ५ ॥

इदानीं जीवबुद्धि उभौ प्रति आह—येति—

॥ श्लोकः ॥

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥६॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥७॥

॥ टीका ॥

ये पुरुषा मत्परायणा भूत्वा मयि सर्वकर्माणि अर्पयन्ति अनन्येन फलवासनारहितेन कर्म्मणा मां ध्यायन्तः सन्तः उपासते मामेव वाञ्छन्तीत्यर्थः ॥६॥

तेषामहं समुद्धर्त्ता अर्थात् जन्मजन्मान्तरेपि मद्भ-
क्तिविस्मरणं न भवति अतएव भक्तियुक्तानां अचिरा-
दल्पकाले भगवान् एव उद्धर्त्ता संसारबन्धनादित्यर्थः ॥

तदुद्धारणं दर्शयति । मयीति—

॥ श्लोकः ॥

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥८॥

॥ टीका ॥

अर्थात् मनसः कल्पनां बुद्धेर्विचारं मयि धारयन्सन् मयि ऊर्द्धं गतिं मृत्युरूप अव्यक्तात्तरिष्यसि ॥८॥

उक्ताव्यक्तगतिरुद्धारणासिद्धिहेतुमाह—अथेति—

॥ श्लोकः ॥

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥९॥

॥ टीका ॥

यदि सर्वदा चित्तं मयि स्थिरं न भवति तर्हि अभ्यासं कुरु ॥ ९ ॥

अथान्यसुगमप्रकारमाह—अभ्यासेति—

॥ श्लोकः ॥

अभ्यासेप्यसमर्थोसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥१०॥

॥ टीका ॥

यदि एकान्ते स्थित्वा अभ्यासमपि न भवति तर्हि मत्कर्म स्नानपूजादिमार्जनादिकर्माणि कुरु ॥ १० ॥

अथ सर्वकर्माऽशक्तस्य यत्कर्त्तव्यं तदाह—अथेति—

॥ श्लोकः ॥

अथैतदप्यशक्तोसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥११॥

॥ टीका ॥

यदि पूर्वोक्तकर्मसु अशक्तः तर्हि सर्वकर्मफलस्य च सङ्कल्पं त्यक्त्वा मदीयं आश्रितरूपं योगं कुरु ॥११॥

उक्त आश्रय आश्रितरूपस्य लक्षणयुक्तमाहात्म्यमाह— श्रेयो हि इति—

॥ श्लोकः ॥

श्रेयो हि ज्ञानमभ्यासाद् ज्ञानाद्ध्यानं विशिष्यते।
ध्यानात्कर्मफलं त्यागः त्यागाच्छान्तिरनन्तरम् ॥

॥ टीका ॥

मयि एव मन आधत्स्वेति ज्ञानं ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्परा अनन्येनैव योगेन मां ध्यायन्त उपासते इति ध्यानं अथैतदप्यशक्तोसीति कर्मफलत्यागं त्यागात् शान्तिरनन्तरं तत्किं पराऽपरा नाम प्रकृतिरुभयो मम अन्तरं नास्ति इत्यनन्तररूपं याद्भावं स एव शान्तिः कथ्यते यथा रवेः प्रभा भांति प्रभारविसङ्गात्परा ज्ञेया भांति सर्वव्यापकत्वादपरा ज्ञेया एवं चन्द्रस्य कला परारूपा कान्तिः अपरारूपा तथैव अग्नेःशिखापरारूपा दीप्तिजगद्व्यासत्वादपरारूपा॥

अथोक्तभावस्य सिद्धार्थं दर्शयति। अद्वेष्टा इति—

॥ श्लोकः ॥

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥१३॥

॥ टीका ॥

अद्वेष्टा सर्वभूतानां मैत्रकरुण एव च इति वाह्येनानन्तरभावं निर्ममो निरहङ्कार इति अन्तरीय अनन्तर्भावं समदुःखसुखःक्षमीति वाह्यान्तरतः अनन्तर्भावं ॥ १३ ॥

अनन्तर्भावस्य फलमाह—सन्तुष्ट इति—

॥ श्लोकः ॥

सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनो बुद्धिर्यो मद्भक्तः स मे प्रियः ॥१४॥

॥ टीका ॥

उक्तप्रकारेण मनो बुद्धिं मयि अर्पितः सन् मत्प्रियो भवति ॥ १४ ॥

अथोक्तसमभावं विस्तरेणाह—यस्मादिति—

॥ श्लोकः ॥

यस्मान्नोद्विजते लोको लोकान्नो द्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥१५॥
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी भक्तिमान्यः स मे प्रियः॥१६॥
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः।१७।

समः शत्रौ च मित्रे च तथा मानापमानयोः।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः॥१८॥
तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित्।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः॥१९॥

॥ टीका ॥

यस्मात् लोको नोद्विजते, यत्कर्मणि कृते लोकानां दुःखं भवति तन्न करोति परकृतदुःखदायकमपि कर्म्म अकृत्वा दुःखं न मन्यते सहनशीलो भवतीति भावः तल्लक्षणं आह—हर्षामर्षभयोद्वेगैः रहितो मे प्रियः स्यात् प्राप्तौ हर्षः अप्राप्तौ क्रोधः मदाश्रयेण भयोद्वेगरहितः मे प्रियः॥ १५॥ अनपेक्षः अपेक्षारहितः अप्राप्तवस्तुषु प्राप्तिकाङ्क्षारहितः शुचिः निष्कामया स्नानादीनां अन्तर्बाहिः शुचिः दक्षः चातुर्य्यः अर्थात् जन्ममरणं परमेश्वराधीनं न तु रोगादीनां उदासीन-देहादिममताशून्यः गतव्यथः परमेश्वराधीनं मृत्युं ज्ञात्वा तन्निमित्ते व्यथितो न भवति भगवत्स्मरणव्यतिरिक्तान्यविषये आरम्भं न करोति स मे प्रियो भवतीत्यर्थः॥ १६॥ यः पुरुषः देहस्य सुखदुःखप्राप्तौ न हृष्यति न दुष्यति अनित्यं देहं ज्ञात्वा देहनिमित्ते न शोचति मद्भक्तिव्यतिरिक्तदेव देहादिकमपि न का-

न्छति अतः सर्वं शुभाशुभमनित्यं ज्ञात्वा त्यजति, स मे प्रियः ॥ १७ ॥ मदीयभावयुक्तः शत्रुमित्रादिषु सर्वत्र समबुद्धिः मानापमानं क्षणभङ्गरूपं ज्ञात्वा सुखदुःखं न मन्यते यः शीतोष्णः देहं दुःखदायी स एव शीतोष्ण ऋतुकालानुसारेण कदाचित् सुखदायको भवति इति ज्ञात्वा समं पश्यति अतएव सर्वसङ्गरहितः ॥ स्तुतिनिन्दाकारकः पुरुषो निजसदृशं ज्ञात्वा मौनी भवति अतएवाह येन केन प्रकारेण सन्तुष्टो भवति अनिकेतः गेहापत्यादिषु ममतारहितः एतल्लाभः स्थिरमतिः पुरुषो मे प्रियो भवति ॥ १६ ॥

उक्तभक्तियोगस्य माहात्म्यमाह—ये त्विति—

॥ श्लोकः ॥

ये तु धर्म्यामृतमिदं यथोक्तं पर्य्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः॥२०॥

॥ टीका ॥

ये भक्ताः श्रद्धायुक्ता विश्वासयुक्ता मत्परायणा इदं मद्भक्तियोगयुक्तं अमृतरूपं यत् धर्मं यथा मया उक्तं तथा उपासते ते मे अतीव प्रियास्युरित्यर्थः ॥२०॥

इति श्रीमद्भगवद्गीताटीकायां श्रीपुरुषोत्तमदासकृतायां द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीभगवतः परापरा नाम प्रकृतिरुभयोरनन्तरूपयोः यथाभक्ति कर्त्तव्यं तथैव कथितं इदानीं जीवभूता निर्गुणरूपा परा प्रकृतेः स्वतन्त्रलक्षणमाह—

इदमिति । श्रीभगवानुवाच—श्लोकः ।

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः ॥१॥

॥ टीका ॥

इदं मनबुद्धिप्राणादियुक्तं शरीरं क्षेत्ररूपं कथ्यते एषां मनबुद्धिप्राणादीनां यत् ज्ञाता स क्षेत्रज्ञः कथ्यते, तद्विदो नाम तद्भेदज्ञापका इत्यर्थः ॥ १ ॥

इदानीं अनन्तरूपेण क्षेत्रज्ञस्य लक्षणमाह—

क्षेत्रज्ञमिति—

॥ श्लोकः ॥

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तद्ज्ञानं मतं मम ॥ २ ॥

॥ टीका ॥

उक्तवचनद्वारा यदि जीवेश्वरयोरेक एव तत्वं मन्यते तन्न घटते यतः श्रीपरमेश्वरः त्रिकालज्ञप्रकृतिनियन्तारूपेण अनेकरूपाणि धारयति, तद्वत् जीवात्मा मनबुद्धिनियन्ता न भवति, प्रमाणं—"आब्रह्मभुवनाल्लोकाः

पुनरावर्तिनोऽर्जुन"-पुनश्च शिवोभगवानपि देहत्याग-रूपेण मृत्युञ्जयो भवति, प्रमाणं—"नहि स्वात्मारामं विषयमृगतृष्णा परिभ्रमयति"—अतः जीवेश्वरयोर्नि-यन्ता नियम्यरूपसम्बन्धं चतुर्दशे वक्ष्यति ॥ २ ॥

इदानीं क्षेत्रक्षेत्रज्ञलक्षणमाह—तदिति—

॥ श्लोकः ॥

तत्क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥३॥

॥ टीका ॥

तत् क्षेत्रं यादृक् तत्र विकारं प्रभावमपि विस्त-रेण शृणु ॥ ३ ॥

अन्यप्रमाणेन आह—ऋषिभिरिति—

॥ श्लोकः ॥

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥

॥ टीका ॥

क्षेत्रक्षेत्रज्ञविभागमतज्ज्ञानं ऋषिभिरपि बहुधा क-थितं तथा वेदैरपि पृथक् वर्णितं ब्रह्मसूत्रसाधकपदैरपि कथितं हेतुमद्भिः नाम दृष्टान्तद्वारा भेदमतं निश्चितं कृतमित्यर्थः ॥ ४ ॥

उक्तप्रमाणद्वारा उक्त्वा इदानीं क्षेत्ररूपतत्वलक्षणमाह—महाभूतानीति—

॥ श्लोकः ॥

महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥५॥

॥ टीका ॥

महाभूतानि नाम पृथिव्यप्तेजोवाय्वाकाशात्मकानि तमोगुणरूपाहङ्कारपञ्चभूतनिर्मितस्थूलदेहसङ्गात् अहं कर्त्तेत्यभिमानं करोति तथा श्रोत्रादिपञ्चज्ञानेन्द्रियसङ्गात् अहं भोक्तेत्यभिमानं करोति तथैव मनसङ्गादहं भोक्तेति मन्यते बुद्धिर्विवेकवती कर्तव्याऽकर्तव्यादिविचारवती अव्यक्तं देवातिर्यङ्मनुष्याणां योनिरूपं वाक्पाणीपादोपस्थपायुश्रोत्रत्वक्चक्षुजीह्वाघ्राणानि दशेन्द्रियाणि एको मनः तन्मध्ये पञ्चज्ञानेन्द्रियाणां गोचराणि विषयरूपाणि शद्बस्पर्शरूपरसगन्धादीनि ॥

अन्यत्क्षेत्ररूपमाह—इच्छेति—

॥ श्लोकः ॥

इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥

॥ टीका ॥

संघातचेतना नाम चित्तवृत्तिः धृतिर्नाम धारणावृत्तिः

एतदुभौ इच्छाद्वेषसञ्ज्ञात्सुखदुःखयोः भोक्तृरूपौ एतत् सविकारं क्षेत्रं संक्षेपेन कथितं ॥ ६ ॥

उक्तक्षेत्रसञ्ज्ञिनः क्षेत्रज्ञस्य जीवात्मनः ज्ञानोत्पत्तिलक्षणमाह—अमानीति—श्लोकः ।

अमानित्वमदंभित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥७॥
इन्द्रियार्थेषु वैराग्यमनऽहङ्कारमेव च ।
जन्ममृत्युर्जराव्याधिर्दुःखदोषानुदर्शनम् ॥८॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥
अध्यात्मज्ञाननित्यत्वं तत्वज्ञानार्थदर्शनम् ।
एतद्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा॥११॥

॥ टीका ॥

अहङ्कारसञ्ज्ञात् यत् अहं मनुष्य इत्यादि अभिमानं करोति तद्राहितः तथा अहं ज्ञाता इति ज्ञानदम्भरहितः बुद्धीन्द्रियादिप्रति द्वेषराहितः अर्थात् बुद्धीन्द्रियादि मदीयो नास्ति इति ज्ञात्वा द्वेषरहितो भवति

अतएव क्षान्तिक्षमायुक्तो भवति आर्जवं हृदयकोमलत्वं अर्थात् मनबुद्ध्यादीनां संस्रातिरूपदुःखेन दुःखीभवति सद्गुरुर्ज्ञानदाता तस्य सेवनं शौचं कामक्रोधादिकषायरहितं स्थैर्य्यं चञ्चलत्वरहितं आत्मनिग्रहनाम मनसः निग्रहं कल्पनाराहित्यमित्यर्थः ॥७॥ ज्ञानेन्द्रियाणां भोगवासनायां कर्मेन्द्रियाणां कर्मवासनायां वैराग्यं कर्तृत्वभोक्तृत्वभर्त्तृत्वाद्यहङ्काररहितः जन्ममृत्युजराव्याधिरूपं दुःखदोषं वारं वारं दर्शयति ॥ तद्दुःखादिदर्शने पुत्रदारगृहादिष्वपि आसक्तो भवति न कश्चिन्मदीयसङ्गीति ज्ञात्वा अनभिष्वङ्गः सङ्गरहितः नित्यं प्रति समचित्तः इष्टानिष्टः इष्टे परमानन्दस्वरूपे परमेश्वरे निष्ठां उत्पादयति ॥ ९ ॥ अनन्ययोगेन मद्व्यतिरिक्त अन्यवासनां त्यक्त्वा यद्वा मयि प्रति अपृथग्भावेन अव्यभिचारिणी नाम निष्कामा भक्तिः जनसंसदि विषयासक्तजनानां अरतिं नाम सङ्गं त्यक्त्वा एकान्ते निवासं करोति ॥ १० ॥ अध्यात्मज्ञाननित्यत्वं नित्यं प्रति तत्वविचारं कर्तव्यं स एव तत्वज्ञानार्थे कर्तव्यं तद्ज्ञाते तत्वदर्शनं भवति एतदेव ज्ञानस्य लक्षणं प्रोक्तं अन्यथा अज्ञानं भवतीत्यर्थः ॥ ११ ॥

एतदुक्तज्ञानद्वारा यत् ज्ञेयं जाननीयं तदेव कथयति—

ज्ञेयमिति—श्लोकः ।

ज्ञेयं यत्तत्प्रवक्ष्यामि यद्ज्ञात्वामृतमश्नुते ।
अनादिमत्परंब्रह्म न स तन्नासदुच्यते ॥१२॥
सर्वतः पाणिपादन्तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥१३॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥१४॥
वहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वादविज्ञेयं दूरस्थं चान्तिके च तत् ॥१५॥
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तद्ज्ञेयं ग्रसिष्णु प्रभुविष्णु च ॥१६॥
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम् ॥१७॥

॥ टीका ॥

यत् ज्ञात्वा अमृतं अश्नुते जन्ममरणाद्रहितो भवति तत् ज्ञेयं प्रवक्ष्यामि कथयामि अनादिमत् आदिमध्यान्तराहितं सर्वत्र पूर्णमिति भावपरं उत्कृष्टं ब्रह्म अर्थात् वेदरूपशब्दब्रह्मात् अक्षररूपजीवब्रह्मात् उत्कृष्टं श्रेष्ठं सदऽसत् स्थूलसूक्ष्मरूपो भेदः स भेदो भावर-

हितः कैवल्यस्वरूपः ॥ १२ ॥ तदेव दर्शयति; सर्वतो नाम ब्रह्मादिमशकपर्य्यन्तं तस्यैव पाणिपादं तथा सर्वतः अक्षिशिरोमुखं कर्णौ सर्वस्य आवरणरूपं ॥१३॥ सर्वेन्द्रियविवर्जितो सर्वेन्द्रियगुणानां प्रकाशकः तद्यथाह श्रुतिः "अपाणिपादो पवनं गृहीत्वा पश्यत्यचक्षुः सः शृणोत्यकर्णः। सविश्ववेत्ता नहि तस्य वेत्ता तमाहुराद्यं पुरुषं पुराणम्॥" अशक्तं अन्तशक्तं सर्वभृत् सर्वस्य धारकं निर्गुणं कैवल्यरूपं गुणभोक्तृ नाम अणिमादि ऐश्वर्य्याणां अविरुद्धरूपं तद्यथाह भागवते "वेदस्तुत्यां त्वमसि यदात्मनः समविरुद्धसमस्तभागः" ॥ १४ ॥ पूर्णत्वं दर्शयति चराचरं स्थावरजङ्गमादिभूतानां वहिरन्तपूर्णं सूक्ष्मत्वात् वाङ्मनसः अगोचरत्वात् अविज्ञेयं अतएव दूरस्थं अविज्ञेयत्वात् च पुनः ज्ञाते सति अन्तिके अतिसन्निकटे आश्रयरूपमित्यर्थः ॥ १५ ॥ सर्वेषां भूतानां कर्मनिष्ठात्वात् अविभक्तरूपं कथितं तेषां पृथक् मतेन फलदायकरूपत्वात् विभक्तमिव दृश्यते भूतभर्तृ अतएव सर्वभूतानां भर्त्तारूपं तदेव ज्ञेयं जाननीयम्ग्रासिष्णुः ग्रसयाति प्रभविष्णुः उत्पादयतीत्यर्थः ॥ १६ ॥ ज्योतिषां चन्द्रसूर्यादीनामाधिकज्योतिः अत एवाह तमसः परं अव्यक्तात् परं ज्ञानं

ज्ञेयं यत् क्षेत्रक्षेत्रज्ञरूपं पृथग्भावं एतदुभयोर्ज्ञानगम्यं अपृथक् भावं भावभेदज्ञानरहितं यद्वा ज्ञानं क्षेत्रज्ञ-रूपं ज्ञेयं। विवेकवती ज्ञानस्य सहायकारणी बुद्धिः एतदुभयोरपि ज्ञानस्य गम्यं अर्थात् ज्ञानविवेकयुक्तानां गम्यं न त्वविवेकीनामिति अतः सर्वस्य हृदयेऽधिष्ठितं अन्तर्यामिरूपेण स्थितमित्यर्थः ॥ १७ ॥

पूर्वोक्तमेव दर्शयति—इतीति—श्लोकः।

**इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः।**
**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥**

॥ टीका ॥

यत्पूर्वं ज्ञानज्ञेयस्य विवेकगम्यं इत्युक्तं प्रमाणं ददामि बुद्धं योगं तं इति बुद्धिं प्रति प्रमाणं—अथ जीवं प्रति प्रमाणं—'तेषामेवानुकं पार्थमहमज्ञानजं तमः नाशयामीति' अतएव जीवात्मा तथा बुद्धिः उक्त उभौ तस्य पराऽपरारूपा प्रकृतिद्वारा स एव तमसः परः एव भूतं जाननीयं एतदेव पूर्वं सगुणोपासनायां विस्तरेण कथितं तदिदानीमपि कथितं इति क्षेत्रं तथा ज्ञानमिति मद्भक्तः एतत्पूर्वोक्तं विज्ञाय मद्भावाय मदीयकैवल्यरूपं प्राप्यते, यदाह—"सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः" अतः समस्तानिरालम्बो-

पनिषादि यद्ज्ञानं तस्य सारं दुग्धरूपं एतद्गीताज्ञानं तथा कर्मकाण्डेन उक्तं यज्ञार्थात्कर्मणोन्यत्र लोकोयं कर्मबन्धनः तथा पुनरेवाह—देवान्भावयतानेन ते देवा भावयऽन्तु वः" एतदुभावुपनिषदौ गौ-रूपौ तस्य सारं दुग्धं अन्नाद्भवन्तीत्याह—सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितमिति—तथा यद्देवकाण्डेन सगुणोपासनाया-माह—"यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति" अर्थात्सर्वत्रान्तर्यामी सर्वस्य नियन्तारूपेण स एव उपास्यः एतदेव सर्वोपासनां साररूपमुपदेशं तथे-दानीं यत् क्षेत्रज्ञद्वारा निर्गुणोपासनारूपं ज्ञानकाण्डे सर्वज्ञानसारं कथितं इति क्षेत्रं तथा ज्ञानमिति ॥१८॥

इदानीं गौ रूपं अन्योपनिषदमतमाह—प्रकृतिमिति—

॥ श्लोकः ॥

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्॥१९॥
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥२०॥
पुरुषः प्रकृतिस्थोहि भुंक्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोस्य सदसद्योनिजन्मसु ॥२१॥

॥ टीका ॥

प्रकृतिपुरुषौ उभौ अनादी ज्ञातव्यौ विकाराः अध्यात्म-अधिभूत-अधिदैवरूपाः गुणाः सत्वरजस्तमसः एते प्रकृतेरुद्भवा ज्ञेयाः ॥ १९ ॥ कार्यकारणकर्तृत्वात् प्रकृतिः कथ्यते तथा सुखदुःखानां भोक्तृत्वे हेतुपुरुष उच्यते न केवलं लिङ्गभेदं ॥ २० ॥ सुखदुःखभोक्तृत्वे हेतुमाह—प्रकृतिस्थः पुरुषः तत्कृतान् गुणान्भुक्ते अर्थात् प्रकृतिसङ्गात् अहं ममत्वभावं कुर्वन् सन् तत्प्रकृतेः कृतं सुखदुःखं स्वयमेव भोक्ता भवति यथा स्त्रिपुत्रादिदुःखे ममत्ववशेन दुःखीभवति तत्कारणं प्रकृतिः सत्वादिगुणसङ्गात् सदसत् योनिजन्मसु भवति सत्वसङ्गात् देवयोनिरजस्सङ्गान्मनुष्ययोनिः तमस्सङ्गात्पश्वादियोनिः तत्र देवयोनिरूपेण अमृतादिपानद्वारा सुखं भुनक्ति पश्वादियोनिरूपेण यज्ञसाधानार्थे हिंसाद्वारा दुःखीभवति यथाह—श्रुतिः, "यज्ञार्थे पशवः श्रृष्टाः" "यज्ञार्थे पशुघातनं" इति" तथा मनुष्यरूपेण ममत्वद्वारा सुखं दुःखं उभयं भुनक्ति इत्यर्थः ॥ २१ ॥

अथ पूर्वोक्तपुरुषः कार्यकारणरूपेण द्विधा वर्तते तद्यथाह—श्रुतिः कार्यउपाधिरियं जीवकारणं उपाधिरी-

श्वरः इति तदत्र कार्यसङ्गाद्वर्णितं इदानीं कारणस-ङ्गात् लक्षणमाह—उपद्रष्टेति—

॥ श्लोकः ॥

उपद्रष्टानुमन्ता च भर्त्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेस्मिन्पुरुषः परः ॥२२॥

॥ टीका ॥

अस्मिन्देहे कार्यरूपोपद्रष्टा स एव कारणरूप अ-व्यक्तस्थाने कालसङ्गात् वर्तते गुणव्यतिकरः काल इति वचनात् अनुमन्ता नाम नियन्तारूपेण भर्त्ता भोक्ता महेश्वरः कथितः परमात्मा श्रेष्ठात्मा रूपेण वर्तते ॥ २२ ॥

एतद्ज्ञानस्य माहात्म्यमाह—यइति—

॥ श्लोकः ॥

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोपि न स भूयोभिजायते ॥२३॥

॥ टीका ॥

य एवं भूतं उक्तपुरुषं निर्गुणं वेत्ति प्रकृतिं गुणैः सह वेत्ति सर्वथा वर्तमानः मरणावस्थापर्य्यन्तं ज्ञानविस्म-रणं न भवति अतः भूयो न जन्ममरणं भवतीत्यर्थः ॥

उक्तज्ञानस्य साधनमाह—ध्यानेनेति—

॥ श्लोकः ॥

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥२४॥

॥ टीका ॥

ध्यानेन नाम एकाग्रमनसा प्रमाणं यदोपरामो मनसः नाम रूपे रूपस्य दृष्टिः स्मृतिसंप्रमोषात् केचित् आत्मना नाम निजक्षेत्रज्ञद्रष्टारूपसङ्गात् अन्ये तत्वानां संख्यायुक्तेन सांख्ययोगेन कर्मयोगेन कर्मफलदायकरूपेण आत्मानमनुमन्तारूपं पश्यन्तीत्यर्थः ॥

अन्यप्रकारमाह—अन्य इति—

॥ श्लोकः ॥

अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥२५॥

॥ टीका ॥

उक्तमन्तं अजानन्तः अन्येभ्यः सकाशात् श्रुत्वा श्रद्धायुक्ता उपासते तेपि मृत्युं तरन्ति ॥ २५ ॥

एतत् क्षेत्रक्षेत्रज्ञलक्षणं उपसंहरति—यावदिति—

॥ श्लोकः ॥

यावत्संजायते किञ्चित्सत्त्व स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगाताद्विद्धि भरतर्षभ ॥ २६ ॥

॥ टीका ॥

यावन्मात्रं सत्वं क्षेत्रक्षेत्रज्ञसंयोगात् भवति ॥२६॥

तदेव विस्तरेणाह—सममिति—

॥ श्लोकः ॥

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति सः पश्यति ।२७।

॥ टीका ॥

क्षेत्रेषु विनश्यत्सु अविनश्यन्तं यः पश्यति स एव पश्यति नान्यः अर्थात् क्षेत्राणि व्यक्ताव्यक्तरूपेण देवमनुष्यपश्वादिरूपेण बहुधा भवन्ति किन्तु क्षेत्रज्ञः सर्वत्र समरूपेण वर्तितः सन् न विनश्यति ॥ २७॥

इदानीं क्षेत्राणि प्रति वदति—सममिति—

॥ श्लोकः ॥

समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।
न हि नस्त्यात्मनात्मानं ततो याति परांगतिं॥२८॥

॥ टीका ॥

पूर्वोक्तक्षेत्रज्ञः यथा सर्वत्र समरूपेण वर्तते तथा क्षेत्राण्यपि देवमनुष्यादिरूपेण इन्द्रियभूतमनांसि षोडशकलायुक्तः समं पश्यति आत्मनात्मानं न हि-नस्ति न विनाशं पश्यति तदुक्तं न चैव न भविष्याम

सर्वे वयमतः परं अर्थादियं सर्वे पूर्वे न भूयास्म किं अग्रे न भविष्यामः इति काकुः एवं ज्ञात्वा परां गतिं याति ॥

तर्हि देहिनः देहस्य किं न्यूनाधिक्यं तदेवाह—प्रकृत्येति—

॥ श्लोकः ॥

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥२९॥

॥ टीका ॥

कर्ता प्रकृतिः अकर्ता जीव एतदेव कर्ता-अकर्ता-रूपेण न्यूनाधिकं ज्ञातव्यमित्यर्थः ॥ २९ ॥

अथ कैवल्यरूपं वर्णयति—यदेति—श्लोकः ।

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥३०॥

॥ टीका ॥

क्षेत्रक्षेत्रज्ञरूपं पृथग्भावं लयसमये एकस्थं भेद-रहितं भवाति तत एव स्थानादुत्पतिर्भवति स एव कैवल्यरूपः अत्र प्रमाणं—"आसीद्ज्ञानमर्थोऽर्थ एक एवाविकल्पितमिति ॥ ३० ॥

तदेवाविकल्पिततत्त्वस्य रूपमाह—अनादीति—

॥ श्लोकः ॥

अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।
शरीरस्थोपि कौन्तेय न करोति न लिप्यते ॥३१॥

॥ टीका ॥

अनादित्वाज्जन्मादिरहितत्वात् निर्गुणत्वात्पृथक् भावरहितत्वात् अयं परमात्मा अव्ययरूपः शरीरस्थोपि अकर्ता भोक्तारूपेण वर्तते ॥ ३१ ॥

तद्दृष्टान्तेनाह—यथेति—श्लोकः ।

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥३२॥

॥ टीका ॥

यथा वहिरन्तरस्थो आकाशः अभिन्नरूपेण वर्तते तथोक्तकैवल्यरूपात्मा न लिप्यते ॥ ३२ ॥

इत्येवं कैवल्यस्य आकाशवत् स्थितिं वर्णयित्वा इदानीं तस्य कर्म्म वर्णयति—यथेति—श्लोकः ।

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥३३॥

॥ टीका ॥

यथा एको रविः इमं सप्तद्वीपयुक्तं लोकं प्रकाशयति तथा क्षेत्रज्ञोपि सर्वक्षेत्राणि प्रकाशयति अर्थात् ब्रह्मादीनां सर्वेषामन्तष्करणं प्रकाशयति ॥ ३३ ॥

उक्तज्ञानस्य माहात्म्यं आह—क्षेत्रेति—श्लोकः ।

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतं प्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥३४॥

॥ टीका ॥

उक्तप्रकारेण क्षेत्रक्षेत्रज्ञयोरन्तरं भेदं ये विदुः ज्ञास्यन्ति ते परं पदं उक्तकैवल्यपदं यान्ति च पुनः प्रकृतिरुद्भवभूतेभ्यः षोडशकलारूपेभ्यः मोक्षं भवति अर्थात् प्रकाश्य प्रकाशकवद्भेदं यः पश्यति सभूतग्रामान्मुक्तः कैवल्यपदं यातीत्यर्थः ॥ ३४ ॥

इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसम्वादे श्रीपुरुषोत्तमदासपरमवैष्णवकृत अद्वैतामृतटीकायां क्षेत्रक्षेत्रज्ञयोगो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

यथा पूर्वे सगुणोपासनायां भिन्नभिन्नदेवानां तथा उपासकानामपि प्रेरकनियन्तारूपमन्तर्यामि कैवल्यरूपं वर्णयित्वा तत्फलमपि अन्तवत्त्वादनित्यं कथितं तथा इदानीं यत्प्रकृतिपुरुषविभागरूपेण पुरुषद्वारा निर्गुणोपासनां वर्णयित्वा आदित्यवदिति दृष्टान्तेन रूपं कैवल्यं मुक्तिफलं वर्णितं तथा च क्षेत्रक्षेत्रज्ञद्वारा "ज्ञानं ज्ञेयं ज्ञानगम्यं हृदिसर्वस्याधिष्ठितम्" इति कथितम् तदन्तर्यामिरूपं इदानीं निर्गुणोपासनायां उपास्य उपासकयोरुभयोर्नियन्तारूपमाह—

श्रीभगवानुवाच—श्लोकः।

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम्।
यद्ज्ञात्वा मुनयःसर्वे परां सिद्धिमितो गताः॥१॥
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
सर्गेपि नोपजायन्ते प्रलये न व्यथन्ति च॥२॥

॥ टीका ॥

ज्ञानानां मध्ये यत् उत्तमं परं ज्ञानं तदहं पुनरेव वक्ष्यामि यद्ज्ञात्वा मुनयः परां सिद्धिं नाम परां भक्तिं मद्भक्तिं प्राप्तवन्त इत्यर्थः॥ १ ॥ साधर्म्यं नाम सा-म्यरूपेण अपृथग्धर्मं प्राप्ताः सन्तः सर्गे सृष्ट्युत्पत्ति-समये न जायन्ते प्रलये न म्रियन्ते॥ २ ॥

तदेव ज्ञानमाह—ममेति—श्लोकः।

ममयोनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
सम्भवः सर्वभूतानां ततो भवति भारत॥३॥
सर्वयोनिषु कौन्तेय मूर्त्तयः सम्भवन्ति याः।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता॥४॥

॥ टीका ॥

यत् त्रिकालज्ञाप्रकृतिर्द्वारा अहं लीलारूपं जन्मा-दिकं धारयामि सा एव मम योनिमहद्ब्रह्मरूपा स-

वंगतब्रह्मरूपा प्रमाणं—"प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया" इति तद्योनिमध्ये जीवात्मानं अहं प्रेरणं कृत्वा सर्वभूतानां समस्तजगतां साधारणकारणरूपं प्रणवाक्षरं उत्पादयामीति भावः सर्वभूतानां सम्भवः प्रणवः ॥ ३ ॥ इति जगतः साधारणकारणरूपं प्रणवं वर्णयित्वा उत्पत्तिं दर्शयति सर्वयोनि नाना ब्रह्मादिदेव तीर्यङ्मनुष्याणां कारणरूपं यदव्यक्तयोनि तत्पर्य्यन्तं जीवात्मा प्रेरणद्वारा ते ब्रह्मादया रूपवन्तः भवन्ति तस्मादहं पिताआदिप्रणवं अन्ते अव्यक्तं मध्यस्थाने सृष्टिर्विचारणीयं तदेव यत्प्रणवस्य अकार-उकारमकाररूपा त्रयवर्णाः तद्द्वारा यत् छन्दांसि वेदमुत्पत्तिकृतं यन्मन्त्ररूपा देवा त्रिकालज्ञज्ञानसङ्गात् अर्जुनं प्रति दर्शिताः इति वर्णसृष्टिः प्रणवः तन्मन्त्र यद्दैवत्वं तस्मिन् जीवात्मप्रवेशत्वात् राश्यात्मककालचक्रसङ्गात् ब्रह्मादित्रयोदेवा भवति त एव त्रिवर्णात्मकत्वात्सत्वादित्रिगुणाधिपतयः भवन्ति अथ कालोत्पत्तौ प्रमाणं भागवते—"कालं चरन्तं सृजतीशआश्रयं प्रधानपुंभ्यां नरदेव सत्यकृत्" अर्थात् सत्यकृदमोघकर्ता परमेश्वरः यदा प्रधानपुंभ्यां प्रेरयति चरति तदाकालं सृजति अत्र प्रधाननानामाव्यक्तावस्थाज-

गत्कारणरूपा पुंनाम जीवात्मा इति प्रमाणं अथ तत्कालस्याव्यक्तशक्तेर्गुणत्रयात् अध्यात्मरूप इन्द्रियाणि अधिभूत नाम आकाशादपि पञ्चभूतानि अधिदैव नाम इन्द्रियाणामधिष्ठातादिग्वातादिदेवता यत्कालचक्रे भ्रमन्ति एतदेवरूपं ब्रह्मगायत्रीमन्त्रे व्यक्तमास्ते ॥ ४ ॥

इदानीं गुणत्रयाणामुत्पत्तिमाह—सत्वमिति—

॥ श्लोकः ॥

सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥५॥

॥ टीका ॥

सत्वादयस्त्रयोगुणाः तदव्यक्तप्रकृते सम्भवाः स्युः त एव गुणा देह देहिनं जीवं बन्धयन्तीति इत्यर्थः ॥५॥

तद्बन्धनरूपमाह—तत्रेति—श्लोकः ।

तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥
रजोरागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥७॥
तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तं निबध्नाति भारत ॥८॥

॥ टीका ॥

निर्मलत्वात् नाम जाग्रदवस्थारूपत्वात् प्रकाशकारी अनामयं रोगरहितं सुखरूपं स एव सुखसङ्गेन ज्ञानसङ्गेन च बध्नाति अहं सुखी अहं ज्ञानी एतदेव वन्धनरूपं ॥ ६ ॥ रागात्मकं स्वप्नावस्थारूपं कामात्मकं तृष्णासङ्गादुत्पद्यते तत्तृष्णार्थं कर्मसङ्गेन वन्धने भवति ॥ ७ ॥ अज्ञानजं तमः सुषुप्त्यवस्थारूपं स एव प्रमादालस्य निद्रारूपेण वन्धने भवति ॥ ८ ॥

तत्र त्रयाणामुक्तगुणानां वृत्तिसंक्षेपेणाह—सत्वमिति--

॥ श्लोकः ॥

सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥९॥

॥ टीका ॥

सत्वगुणः सुखरूपेण जीवं जयति वशं करोति रजं कर्मणि इदमेव कर्तव्यं इति तमस्तु ज्ञानं आवृत्य प्रमादेन अकर्तव्यं कारयति वशं करोति ॥ ९ ॥

इदानीं अन्तस्करणस्य क्षणभङ्गावस्थां वर्णयति—

रजः इति—श्लोकः ।

रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥१०॥

॥ टीका ॥

कदाचिद्रजगुणतमगुणौ कश्चित् अधिकं भूत्वा पश्चात्सत्वं भवति कश्चित् रजः सत्वं भूत्वा पश्चात्तमो भवति कदाचित् तमः सत्वं भूत्वा पश्चाद्रजो भवति पूर्वोक्तं सुखे सत्वं कर्मणि रजः प्रमादे तमः स एव वृत्तिः क्षणं प्रति व्यतिक्रमो भवति इत्यर्थः ॥१०॥

तत्साक्षादेव दर्शयति—सर्वेति—श्लोकः ।

सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥११॥
लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥१२॥
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥१३॥

॥ टीका ॥

पूर्वोक्तगुणव्यतिक्रमलक्षणं सर्वइन्द्रियद्वारेषु प्रादुर्भवति तदेवाह यदा सत्वं वर्द्धते तदा ज्ञानं नाम जाग्रदवस्थायां विद्या नाम शास्त्रं पठनविचारणमित्यादि भावं भवति ॥ ११ ॥ यदा रजोगुणस्य वृद्धिर्भवति तदा लोभसाधनार्थे प्रवृतिर्भवति तदर्थे क-

मसु आरम्भं करोति अर्थात् स्वप्नवत् नानाकर्मसु स्पृहां करोति एतदेव जाग्रदवस्थायां स्वप्नवल्लक्षणं दर्शितं ॥१२॥ तमोगुणे वृद्धे सति अप्रकाशो नाम पूर्वश्रुतं दृष्टं विस्मृतं भवति स्तब्धभावसङ्गात् आलस्यात् सत्कर्मे प्रवृत्तिर्न भवति प्रमादः अकर्तव्यकर्मे बुद्धिः तदेवाह मोह नाम सुषुप्तिरूपो भवतीत्यर्थः ॥ १३ ॥

उक्तवृत्तिसङ्गात् अन्तकालस्य गतिमाह—यदेति—

॥ श्लोकः ॥

यदा सत्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥१४॥
रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥१५॥

॥ टीका ॥

यदा जीवात्मा सत्वे ज्ञानवृद्धे सति देहं त्यजति तदा निर्मलान् स्वर्गादिलोकान् ज्योतिर्मयदेवलोकानित्यर्थः ॥१४॥ रजोगुणवृद्धिसमये देहं त्यक्त्वा मनुष्ययोनिं प्राप्यते तमोगुणे देहं त्यक्त्वा मूढयोनिषु पशुपक्षिस्थावरादियोनिषु जायते इत्यर्थः ॥ १५ ॥

अथ गुणत्रयसङ्गात् कर्मफलमाह—कर्म्मणेति—

॥ श्लोकः ॥

कर्मणः सुकृतस्याहुः सात्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥१६॥

॥ टीका ॥

सात्विकरूप सुकृतकर्मणा अर्थान्निष्कामारूपभगवदाराधनादिना निर्मलं ज्ञानं एव फलं प्राप्नोति सकामारूपरजःकर्मणा दुःखं फलं भवति तथा तमरूपहिंसादिकर्मसङ्गात् अज्ञानं फलं जडवद्भवतीत्यर्थः ॥

तदेव विशेषेणाह—सत्वादि—श्लोकः ।

सत्वात्सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥१७॥

॥ टीका ॥

सत्वगुणसङ्गात् ज्ञानस्योत्पत्तिर्भवति रजसःसङ्गाल्लोभः तमसः सङ्गात् प्रमादमोहौ भवतः ॥ १७ ॥

तत्फलमाह—ऊर्द्धमिति—श्लोकः ।

ऊर्द्धं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥

॥ टीका ॥

सतोगुणे अन्तकालपर्य्यन्तं बुद्धिमन्तः सत्वास्थिता ऊर्द्धं नाम स्वर्गादिस्थानं गच्छन्ति रजोगुणेस्थिताः

पुरुषा मनुष्यलोके भ्रमन्ति तमोगुणे स्थिता अधः नाम पातालादिकं गच्छन्ति इत्यर्थः ॥ १८ ॥

यथा सगुणोपासनायां दक्षिणोत्तरायणादिद्वारा अध ऊर्ध्वगतिर्वर्णिता तथा निर्गुणोपासनायां गुणसङ्गात् जीवात्मनो गतिं वर्णयित्वा इदानीं गुणरहितगतिं वर्णयति—नान्यमिति—

॥ श्लोकः ॥

नान्यं गुणेभ्यः कर्त्तारं यदा द्रष्टानुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥
गुणानेतानतीत्यत्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजराव्याधिविमुक्तोऽमृतमश्नुते ॥ २० ॥

॥ टीका ॥

सत्वादयः त्रयो गुणाः कर्मणः कर्त्तारः स्युः गुणद्रष्टारूपो जीवात्मा न कर्त्ता स्यात् इत्येवं यः पश्यति अर्थात् तं जीवं गुणेभ्यः परं जानन् सन् स पुरुषः मद्भावं नाम मदीयसङ्गं प्राप्नोति ॥ १९ ॥ तदेवाह—जीवात्मा देहोद्भवान् गुणानतीत्य जन्ममृत्युजराव्याधिभ्यो विमुक्तः सन् कैवल्यरूपं प्राप्नोति इत्यर्थः ॥ २० ॥

एतच्छ्रुत्वार्जुन आह—श्लोकः ।

कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्त्तते ॥ २१ ॥

॥ टीका ॥

एतान् गुणान् अतीतो जीवः कैर्लिङ्गैर्वर्त्तते अर्थात् किंस्वरूपः तथा किमाचारः गुणानपि कथं वर्त्तते इत्यर्थः ॥ २१ ॥

अस्योत्तरं—श्रीभगवानुवाच—श्लोकः ।

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥२२॥
उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्त्तन्त इत्येव योवतिष्ठति नेङ्गते ॥ २३ ॥

॥ टीका ॥

प्रकाशं नाम सत्वगुणस्य जाग्रदवस्थारूपं तत्रेन्द्रियाणि सङ्गात्कर्मभोगे प्रवृत्तिः तत्र कर्मभोगसङ्गान्मोह प्रवृत्तिः तत्तमोगुणस्य लक्षणं तत्रापि फलवासनायुक्तः प्रवृत्तकर्मसु न द्वेषं करोति निवृतिरूपकर्मसु नेच्छां करोति प्रवृतिर्नाम वर्णधर्मनिवृतिः नाम आश्रमधर्मः तत्रोभयोरहङ्कारात् रहितो भवति ॥ २२ ॥

तदेवाह—देहे मनबुद्ध्यादिस्थाने उदासीनरूपेण वसति अर्थात् अहङ्कारं त्यजति अतएव गुणैर्न विचाल्यते एवं प्रकारेण उदासीनरूपेण देहे वर्त्तमानः सन्न कम्पते अर्थात् अहङ्कारं न प्राप्नोति इत्यर्थः ॥२३॥

एवं लिङ्गमुक्त्वा आचारमाह—समेति—

॥ श्लोकः ॥

समदुःखसुखस्वस्थः समलोष्टाश्मकाञ्चन ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिंद्यात्मसंस्तुतिः ॥
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥२५॥

॥ टीका ॥

सर्वकर्मारम्भः कर्मसङ्कल्पितवर्जितः गुणातीतस्य एतदेवाऽचारः वर्णितः इत्यर्थः ॥ २५ ॥

एतत्पूर्वोक्तलक्षणं भगवद्भक्तिव्यतिरिक्तस्य न प्राप्यते अर्थादहङ्कारो न उच्यते तदेवाह—मामिति—

॥ श्लोकः ॥

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
सगुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥२६॥

॥ टीका ॥

अव्यभिचारेण नाम अपृथग्भावेन यो मां भजते स एव गुणानतीत्य ब्रह्मभावं प्राप्नोति ॥ २६ ॥

तद् ब्रह्मरूपमाह—ब्रह्मण इति—श्लोकः ।

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च॥२७॥

॥ टीका ॥

समस्तब्रह्मरूपस्य प्रतिष्ठा नाम मूर्तिरूपमहं अमृतस्य नाम सालोक्य सामीप्य सारूप्य सायुज्य साष्टि जीवन्मुक्तादीनामपि प्रतिष्ठारूपोहं अव्ययस्य नाम पृथिव्यादितत्वानां मूर्तिरहं साश्वतस्य नाम अणवादिकल्पपर्यन्तकालात्मकस्य मूर्तिरहं धर्मस्य नाम वर्णाश्रमपरमहंसभागवद्धर्मान्यद्धर्माणामपि मूर्तिरहं सुखस्य नाम स्वर्गमोक्षादिसुखस्यापि मूर्तिरहं एकान्तिकस्य नाम पृथक्देवनिष्टारूपाणामपि मूर्तिरहं अर्थाद्यथा सप्तमेनोक्तम् बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते; वासुदेव सर्वमितीति ॥ २७ ॥

इति श्रीमद्भगवद्गीताटीकायां श्रीपुरुषोत्तमदासकृतायां चतुर्दशोऽध्यायः ॥ १४ ॥

---

इदानीं श्रीभगवतः मूर्तिमत्स्वरूपं विशेषेण वर्णयित्वा अधुना निर्विशेषेण अन्तर्यामिरूपं तथा जीवात्मनः स्वाभाविकलक्षणं वर्णयति—

श्रीभगवानुवाच—श्लोकः ।

ऊर्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥१॥

॥ टीका ॥

उक्ताअधः उर्द्धगतिः उत्तमाधममतेन विचारणीयं न केवलं अधोर्द्धमतेन तत्रोत्तममनन्तं सर्वगतं सर्वान्तर्यामिरूपं तस्मादुत्पन्नं शद्वब्रह्मं छन्दांसि रूपं तद्यथाह श्रुतिः—"आनन्दमूलगुणपल्लवतत्वशाखा वेदान्तपुष्पफलमोक्षरसादिपूर्णम् । चेतो विहङ्गहरितुङ्गतरुं विहाय संसारविटपेन वेद किंरतोसि" इत्यर्थः ॥१॥ उक्तसंसारविटपं प्रवाललतारूपेण वर्णयति, अधेति—

श्लोकः ।

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा-
गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसन्ततानि
कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥

॥ टीका ॥

उक्तश्रुतिप्रमाणे वेदादिपुष्परूपं वर्णितं तथात्र यत् पत्ररूपेण वर्णितं स एव त्रैगुण्यलक्षणं तद्यथाह त्रैगुण्यविषयावेदानि स्त्रैगुण्यो भवार्जुनेति तत्र यथा पत्रपुष्पयोरेकएव स्थानं तदेवाह गुणप्रवृद्धा इति त्रयैगुण्यात्मककर्मसङ्गात् यत् धर्मादिफलसिद्धिहेतु वेदेन कर्मादिवर्णितं स एव कर्मरूपप्रवालस्य अधोर्द्धशाखा

नाम शेषादिब्रह्मापर्य्यन्तं तत्कर्मस्य फलभोगस्थानं वेदेन वर्णितं अधोर्द्धगतिरूपकर्ममेव मूलं ज्ञात्वा अधोर्द्धभ्रमणद्वारा वारं वारं मनुष्यजन्म प्राप्नोति यथाह क्षीणे पुण्ये मृत्युलोकं वसन्ति ॥ २ ॥

तदेव भ्रमणरूपस्य लक्षणमाह—न रूपेति—

॥ श्लोकः ॥

न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च संप्रतिष्ठा ।
अश्वत्थमेनं सुविरूढमूल-
मसङ्गशस्त्रेण दृढेन छित्वा ॥ ३ ॥
ततः पदं तत्परिमार्गितव्यम्
यस्मिन् गतानिवर्त्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥

॥ टीका ॥

अर्थात् फलात्मककर्मसङ्गादुक्तप्रकारेण स्थितिः स्थानं लभते अतएव भ्रमणरूपस्य आदिमध्यान्तमपि न लभ्यते अतएवाह असङ्गशास्त्रेण फलसङ्गात् निष्कामारूपेण तन्मूलं छित्वा कर्मफवासनां त्यक्त्वा॥३॥

यतः परमानन्दस्वरूपात् इदं वेदरूपं वृक्षं उत्पद्यते तत्पदं मार्गितव्यं परमानन्दस्वरूस्य विचारं करणीयं यदानन्दे प्राप्तसन् निजप्रिययुक्तानन्दे स्पृहां न करोति अर्थात् तत्परमानन्दे उत्पत्तिस्थितिलयरूपलीलां विनान्यप्रियो नास्ति प्रमाणं—"स वा इदं विश्वममोघलीलः सृजत्यवतिऽति न सज्जतेस्मिन्" । इत्यर्थः ॥ ४ ॥

तदानन्दप्राप्तौ लक्षणमाह—निर्मानेति—श्लोकः ।

निर्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः ।
द्वंदैर्विमुक्ताः सुखदुःखसंज्ञै-
र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥

॥ टीका ॥

निर्मानमोहा नाम अहं ममत्वरहिताः जितसङ्गदोषा नाम देवतीर्यङ्मनुष्यादि अभिमानं त्यक्त्वा तद्यथाह—हस्तामलकः—"नाहं मनुष्यो न च देवयक्षो न ब्राह्मणा क्षत्रियवैश्यशूद्राः । न ब्रह्मचारी न गृही वनस्थो भिक्षुर्न चाहं निजबोधरूपः ॥ १ ॥ अर्थात् अहं क्षेत्रज्ञरूपः इत्यध्यात्मविद्यायां नित्याभ्यासयुक्ता विमुक्तकामामुक्तेरपि कामनां त्यक्त्वा सुखदुःखसङ्गैः

सङ्गैः द्वन्द्वैर्विमुक्ता जन्ममृत्युरूपसुखदुःखाद्विमुक्ताः सन्तः अमूढा अभिमानरहिताः तदुक्तमव्ययं पदं प्राप्नुवन्तीत्यर्थः ॥ ५ ॥

तत्पदमेव दर्शयति—नेति—श्लोकः ।

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्त्तन्ते तद्धामपरमं मम ॥ ६ ॥

॥ टीका ॥

अर्थात् सूर्यादिमलीनसत्वं स एव शुद्धसत्वज्ञानयुक्तधाम यथाह—श्रुतिः—"आधारमानन्दमखण्डबोधं यस्मिल्लयं यान्ति पुरत्रयं चेति"—पुनर्यथाह—द्वितीयाऽध्याये विहायकामानिति ॥ ६ ॥

इदानीं जीवात्मनः स्वाभाविकलक्षणमाह—ममेति—

॥ श्लोकः ॥

ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनः षष्टानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥७॥

॥ टीका ॥

ममैवांशः जीवः विभागरहितांशः न विभागरूपांशः तद्यथाह—विभूतियोगे एकांशेन स्थितं जगत् एक एवांश न खण्डितमिति यथाह—पराऽपरा उभौ प्रकृतितौ एव अंशरूपेण वर्णितं अतएव स एव अं-

शरूपो जीव अन्तकाले पञ्चज्ञानेन्द्रियसङ्गेन मनसा-यदव्ययमृत्यूक्तरूपे समस्तयोनिकारणरूपे लीनं भवति तदेव भोगलोके जीवलोके आकर्षति अर्थाद्देवमनुष्यादिजन्म प्राप्यते एतदेव जीवात्मनः स्वाभावलक्षणं न भगवत्प्रेरणेन भवति ॥ ७ ॥

तदेवाह—शरीरमिति—श्लोकः ।

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥८॥

॥ टीका ॥

ईश्वरो जीवात्मा यद्यत् शरीरं वाञ्छति तत्तदेवाप्नोति, दृष्टान्तमाह—यथा वायुः पुष्पाशयात् गन्धमाकर्षति तथा अव्यक्तस्थानात्षष्टेन्द्रियाणि जीवभोगस्थाने आकर्षन्ति इत्यर्थः ॥ ८ ॥

तदेव भोगार्थमाह—श्रोत्रमिति—श्लोकः ।

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥
उत्क्रामंतं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥१०॥
यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥११॥

॥ टीका ॥

अयं जीवात्मा मनसि अधिष्ठितो भूत्वा श्रोत्रादि-पञ्चज्ञानेन्द्रियद्वारा शब्दादिपञ्चविषयान्भुङ्क्ते ॥ ९ ॥
तद्विषयान् गृहीत्वा उत्क्रामन्तं नाम गच्छन्तं स्थितं वा, भोगान् भुञ्जानमपि सत्वादिगुणयुक्तं वा अहङ्कारेण विमूढभावं प्राप्ताः सन्तः अहं ममभावेन पृथक् पृथक् कर्मसु कर्मभोगादिवृत्तिसङ्गात् निजस्वरूपं न पश्यन्ति अर्थात् देवतीर्यङ्‌ादियोनिषु सर्वत्र समरूपेण वर्तन्तः सन् यथा समभावं न पश्यति पृथग्भावं मन्यते तथाऽत्यान्तिकपरमेश्वरमपि न पश्यति यदा अहं द्रष्टा मनइन्द्रियाणि मम दृश्यरूपं मद्भिन्नं इति ज्ञानरूपेण चक्षुर्भवति तदा पश्यतीत्यर्थः ॥ १० ॥
योगिनः यतन्तः यत्नशीलाः सन्तः अर्थान्मनआदिपञ्चज्ञानेन्द्रियाणां विषयान् मनसः सङ्कल्पविकल्पादीनि एतत्सर्वं विक्षेपभावं त्यक्त्वा मनः एकाग्रभावं कुर्वन्ति ते यत्नशीलाः आत्मन्यवस्थितं आत्मा सर्वत्र ऐक्यरूपेण पश्यन्ति अकृतात्मानः नाम यैः पुरुषैः इन्द्रियाणि मन एकाग्रं न कृतं तेऽकृतात्मानः त एव अचेतसः पुरुषा यतन्तोऽपि न पश्यन्ति ॥ ११ ॥

अथेदानीं परमेश्वरस्य आन्तिकभावं दर्शयति, यदेति—

॥ श्लोकः ॥

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥१२॥

॥ टीका ॥

मदीय तेजसा रविः प्रकाशते चन्द्रमसि अग्नौ यत्तेजः तदपि मामकं विद्धि अर्थात्सूर्यादिषु सर्वत्रापि मम तेजः चिन्तनीयमित्यर्थः ॥ १२ ॥

तदेवाह—गामिति—श्लोकः ।

गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥१४॥

॥ टीका ॥

गां अविश्य पृथिव्यावृत्तरूपेण ओजसा देवबलेन अहं धारयामि तथा सोमोभूत्वा औषधीन् पुष्णामि अर्थादमृतवर्षाद्वारा औषधीन् रसात्मकं करोमि ॥१३॥

तथा वैश्वानरमाविश्य प्राणिनां देहे प्राणापानसमानस्थानेयुक्तः सन् भक्ष्यभोज्यादिकं आहारमपि अहं पचामि ॥ १४ ॥

इदानीं हृदिस्थं अन्तर्यामिरूपं वर्णयति—सर्वस्येति—

॥ श्लोकः ॥

सर्वस्य चाहं हृदि सन्निविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥

॥ टीका ॥

सर्वस्य हृदि अहं प्रविष्टोऽस्मि अतएव मत्तः स्मृतिर्भवति स्मृतिर्नाम पूर्वजन्मकर्मादिस्मरणत्वं मत्सकासात्प्राप्यते तथा पूर्वजन्मादिषु यज्जातिद्वेषादिज्ञानं तद्ज्ञानमपि मत्सकासात् विस्मृतो भवति, यत् परा पश्यन्ति मध्यमा वैषरी चतुर्विधा वाणी तत्र रुचिवाणी रूपं ऋग्वेदं भयानकवाणीरूपं यजुर्वेदं विस्तारितवाणी रूपं सामवेदं यथार्थवाणीरूपमथर्ववेदं तत्सर्वं मत्प्रेरणादुत्पन्नत्वात् मद्रूपमेव जाननीयं यथाह—श्रुतिः त्वं चत्वारिवागऽपरिमातापदानि इति तद्वेदेन फलदायकरूपं यद्देवं वर्णितं तद्देवरूपोऽप्यहं वेद्यं जाननीयं वेदान्त नामशास्त्रे तदेव जातिद्वेषादिभेदेन वर्णितं तदेव सर्वं ममकृत्यं जाननीयं तच्छास्त्रादिस्थाने यद्गुह्यार्थं तदपि अहं वेद अहं ज्ञाता इत्यर्थः ॥ १५ ॥

इदानीं जीवस्य अति अन्तिकं यत्पूर्वं ज्ञेयरूपेण

वर्णितं तमेव दर्शयति द्वाविमौ इति—श्लोकः ।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षरएव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥१६॥

॥ टीका ॥

अस्मिन् लोके द्वौ पुरुषौ द्वौ रूपौ द्विधा ज्ञातौ तदाह—क्षर अक्षर इति तत्र सर्वभूतानि क्षररूपं पुरुषं एव वेद ज्ञानी तत्ववेत्ताऽक्षररूपं पुरुषं एव वेद अर्थात् ज्ञानहीनाः पुरुषाः साक्षात्कारस्थूलदेहे एव पुरुषरूपं मन्यन्ते तथा ज्ञानिनः पुरुषाः कूटस्थनाम मनबुद्धिइन्द्रियादियुक्तानि यत् क्षेत्रक्षेत्रज्ञविभागरूपेण वर्तते तमेव क्षेत्रज्ञं एव पुरुषं मन्यते ॥ १६ ॥

इदानीं कैवल्यरूपं त्रिभागरहितं उत्तमपुरुषं वर्णयति—उत्तमेति—श्लोकः ।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥१७॥
यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः ।
अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥१८॥
यो मामेव मसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥

॥ टीका ॥

परमात्मा निर्देशः श्रुतिप्रमाणं पूर्वमेवाद्वैतामृत-स्थाने वर्णितं यः परमात्मा लोकत्रयं आविश्य अन्त-र्वहिर्व्यासरूपेण विभर्ति नाम सर्वस्य पालकः पुरुष-त्रयप्रमाणमाह—श्रुतिः अथैवाङ्गिरां त्रिविधिपुरुषस्त-द्यथा वाह्यात्मा अन्तरात्मा परमात्मा चेति ॥ १७ ॥

अर्थान्मित्रे वैरेपि समगतिदायकः अव्ययः उपा-धिभेदरहितः स्वयमेव ईश्वरः तस्मादाह—यस्मात् क्षर-व्यतीतोहं नाम स्थूलदेहाद्व्यतिरिक्तः तथा क्षेत्रक्षेत्रज्ञ विभागरूपपुरुषादपि विभागराहितत्वात्पुरुषोत्तम इति ख्यातोस्मि तथा वेदे च मन्त्ररूपमूर्तिस्थाने आवाहनं करोति, "आविर्भूतं च सृष्ट्यादौ प्रकृतेश्च पुरुषात्परं" लोकेसाक्षात् श्रीकृष्णचन्द्ररूपेण कामदेवरूपविजयेन मानापमानरहितेन तथा ममतारहितेन यद्वृन्दावने मथुरायां द्वारिकायां च लीलादिकं करोति स एव लोके पुरुषोत्तमलक्षणं विचारणीयं ॥ १८ ॥ तस्मादाह—यो मां असंमूढ अहं ममताभावरहितः सन् मदीयपुरुषोत्तम-रूपं जानाति स एव सर्ववित् नाम सर्वशास्त्रादि वेत्ता सर्वभावेन,—"त्वमेव माता च पिता त्वमेव त्वमेव वन्धुश्च सखा त्वमेव । त्वमेव विद्याद्रविणं त्वमेव त्वमेव सर्वं मम देवदेव" इति सर्वभावेन मां भजति इत्यर्थः ॥

एतद्ज्ञानस्य माहात्म्यमाह—इति—श्लोकः ।

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद् बुध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत।२०।

॥ टीका ॥

गुह्यतरादपि गुह्यं गुह्यतमं यत् वाह्यपुरुषं यः कर्ता भोक्तारूपेण वर्त्तते तं वेत्ति स गुह्यज्ञानं तथा द्रष्टा दृश्यरूपेण अन्तर्गतकूटस्थपुरुषं वेत्ति स गुह्यतरज्ञानं यः कैवल्यरूपपुरुषोत्तमं वेत्ति स गुह्यतमं ज्ञानं मया उक्तं एतद्ज्ञानं बुध्वा कृतकृत्यो भवति अर्थात् तस्य सर्वकृत्यं सिद्धं भवति । भारत भा नाम प्रकाशकरूप ब्रह्मतरेति सम्बोधनमित्यर्थः ॥ २० ॥

इति श्रीमद्भगवद्गीताटीकायां श्रीपुरुषोत्तमदास-
कृतायां पञ्चदशोऽध्यायः ॥ १५ ॥

अथ गुह्यतमज्ञानरूपं श्रीपरमेश्वरं उक्तप्रकारेण ये मन्यन्ते अथवा ये न मन्यन्ते तयोरुभयोः पक्षयोर्लक्षणमाह—श्रीभगवानुवाच—श्लोकः ।

अभयं सत्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥१॥

अहिंसा सत्यमक्रोधस्त्यागश्शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ २ ॥
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥३॥

॥ टीका ॥

अभयं नाम जीवेश्वरयोरपृथग्भावं विचारद्वारा जन्ममरणादिभयराहित्यं सत्व नाम ईश्वरे आस्तिकभावद्वारा अन्तःकरणे कामादिमलं त्यक्त्वा संशुद्धिर्भवति ज्ञानयोगे नाम तत्वविचारे सर्वदा स्थितिर्भवति दानं सर्वत्रज्ञानद्वारा अभयं ददाति दमः मन इन्द्रियादीनां कामनात्यागद्वारा दमनं यज्ञः ज्ञानयज्ञं अर्थाज्जीवेश्वरयोर्विचारं करोति यदाह—“श्रेयान्द्रव्यमयाद्यज्ञाद्ज्ञानयज्ञः परंतपेति । स्वाध्यायं सर्वथावेदशास्त्रालोचनं तपः निष्कामहृदयं आर्जवं महत्त्वं परदुःखेन दुःखितम् ॥ १ ॥ अहिंसा परस्य दुःखं न ददाति सत्यं सर्वत्रसाम्यत्वं दर्शनं अतएव क्रोधरहितः त्यागः परस्य पोषणहेतु अनादित्यागं शान्ति तद्दानहेतु शान्तिचित्तं अपैशुनं परनिन्दापवादरहितं दया आत्मपरसमभावेन सर्वत्रभूतेषु दयां करोति, अलोलुप्त्वं लोभराहित्यं आर्दवं परदुःखे आर्द्रचित्तं ह्रीम-

न्दकर्मसु लज्जां प्राप्नोति अचापलं चंचलभावरहितं ॥ तेजः शुद्धकर्मयुक्तत्वं क्षमा सहनशीलत्वं धृतिः चित्त-वृत्तिधारणशीलत्वं शौचं शरीरमनशुद्धित्वं अद्रोहः अन्यं प्रति द्रोहरहितः नातिमानिता अभिमानशून्यता एतदुक्तं सर्वं दैवीसम्पदं अभिजात नाम आनन्दो-त्पादकमित्यर्थः ॥ ३ ॥

इत्युक्तप्रकारेण दैवीं सम्पदां दर्शयित्वा अधुना आसुरीं सम्पदां दर्शयति । दम्भ इति—श्लोकः ।

दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ॥४॥

॥ टीका ॥

दम्भः जातिकुलादिहेतु दम्भं धनादिहेतुदर्प्पः रूपविद्यादिहेतु अभिमानं क्रोधः असहनं पारुष्यं पर-निन्दारतत्वं एतत्सर्वमज्ञानजातं भवति अतएव आ-सुरीसम्पदं भवति ॥ ४ ॥

एतदुक्तउभयोस्सम्पदयोः फलमाह—दैवीति—

॥ श्लोकः ॥

दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचः सम्पदं दैवीमभिजातोसि पाण्डव ॥५॥

॥ टीका ॥

उक्तप्रकारदैवीसम्पदाविमोच्चाय नाम प्रपंचरूप दर्शनाद् रहितो भवति तथा आसुरीमतेन प्रपंचदर्शनं दृढं भवति अतएव दैवीसम्पद्युक्तो भूत्वा मा शुच इत्यर्थः ॥ ५ ॥

इदानीं समुच्चयरूपं वदति—द्वाविति—श्लोकः ।

द्वौ भूतसर्गौ लोकेस्मिंन् दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥६॥

॥ टीका ॥

अस्मिन् लोके द्विप्रकारेण लोकानां जन्म दैव आसुर इति तत्र दैवो पूर्वकथितं अभयं सत्यसंशुद्धि इत्यादिभिः तथा यत्सांख्यैः प्राप्यते तद्योगैरपि तथा सगुणोपासनाद्वारा यदानन्दपदं प्राप्नोति तदेव निर्गुणोपासनाद्वारा प्राप्नोति दैवमतं एतद्यथा विस्तारितमतेन कथितं तथासुरीमतमपि विस्तारितमतेन शृणु इत्यर्थः ॥ ६ ॥

तदेवाह—प्रवृत्तिमिति—श्लोकः ।

प्रवृत्तिं च निवृत्तिं च जनानविदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥७॥

॥ टीका ॥

प्रवृत्तिं बन्धनं निवृत्तिं मोक्षं आसुराः न जानन्ति अत्र प्रमाणं—"बद्धो हि को यो विषयानुरागी को वा विमुक्तो विषयाद्विरक्तः" इति प्रश्नोत्तरं प्रवृत्तिः निवृत्तिरूपं न शौचं नाम मनस्कामादि तथेन्द्रियादि निग्रहरूपं तद्यथाह शौचमिन्द्रियनिग्रहः इति आचारानिष्ठारूपं तद्रहितं सत्यरूपः परमेश्वरस्तेषु न विद्यते ॥७॥

तदेवाह—असत्यमिति—श्लोकः ।

**असत्यमप्रतिष्ठं च जगदाहुरनीश्वरम् ।**
**अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ८ ॥**

॥ टीका ॥

कैवल्यं रूपमीश्वरमसत्यं अप्रतिष्ठं अर्थात्कैवल्यरूपादुत्पत्ति इति न प्रतिष्ठितं अर्थात्साक्षान्न प्रतीयते तदेव साक्षात्कारं दर्शयति अपरस्परसंभूतमिति काकुः अर्थात् परस्परप्रकृतिपुरुषं विना किं जगत्संभवति न भवतीति अतः जगदुत्पत्तिहेतुः कामएव हेतुः किमन्यत् न किमपि, यतः कैवल्यतत्वभावुकानां परमहंसानामपि कामवेगं नास्ति अतएव कैवल्यरूपात्कथं सृष्टिर्भवति ॥ ८ ॥

इदानीं अनीश्वरवादिनां भेददृष्टेर्दूषणमाह—

एतामिति—श्लोकः ।

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥

॥ टीका ॥

एतां दृष्टिं नाम प्रकृतिपुरुषयोर्याभेददृष्टिः तद्वशे भूत्वा अर्थात् महतत्व कार्यकारणत्रिगुणात्मिकारूपायाः प्रकृतिः तस्याःकारण उपाधिसङ्गात् आत्मा ईश्वरो भवति कार्योपाधिसङ्गाज्जीवो भवति इत्येव भेददृष्टिः नष्टात्मा यन्निर्गुणात्मनः प्रसङ्गदृष्टिं करोति स एव नष्टात्मा आत्मतत्वे विचारनष्टेत्यर्थः एके आत्मानम् घ्नन्तीति श्रुतिः ते नष्टात्मानः अल्पबुद्धयः जगतः क्षयाय उग्रकर्माणि नाम उद्यमं कुर्वन्ति ॥ ९ ॥

तज्जगतः अहितस्य कारणमाह—काममिति—

॥ श्लोकः ॥

काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वाऽसद्ग्राहान् प्रवर्त्तन्तेऽशुचिव्रताः ॥

॥ टीका ॥

आसुरीभावयुक्ताः सदा कामं आश्रिताः दुष्पूरं नाम दुःखेनापि पूर्णं न भवति एवं भूतं कामं आश्रिताः वर्त्तन्ते अर्थाद्भक्तिरहिता अर्थादिकामासक्ताः

धनजनादिमदेन आसक्ता मोहात् असत्ग्रहान् असत् रूपं गृह्णाति धनजनादिषु ममतां करोतीत्यर्थः ॥१०॥

तदेव आसुरीवृत्तिं पुनर्दर्शयति, चिन्तामिति—

॥ श्लोकः ॥

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥११॥
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनाऽर्थसंचयान् ॥१२॥
इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥१३॥
असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोहमहं भोगी सिद्धोहं बलवान् सुखी ॥१४॥
आढ्योभिजनवानस्मि कोन्योस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥
अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥१६॥
आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥१७॥

अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥१८॥

॥ टीका ॥

एतत्सर्वं आसुरीवृत्तिलक्षणं सुगमार्थमेव ॥११॥ ॥१२॥१३॥१४॥१५॥१६॥ नाम यज्ञं नाम मात्रमेव यज्ञं अतोऽविधिपूर्वकं विधिरहितं मदऽन्नजवारादिअधमान्नादियुक्तं यज्ञं कुर्वन्ति भगवद्विमुखानामेतादृशमेव लक्षणं भवति इत्यर्थः ॥ १७ ॥ अहङ्कारबलदर्पादिभिराश्रिताः सन्तः परदेहेषु मम एवात्मानं प्रद्विषन्तः अर्थात्मद्व्यतिरिक्तो न किंश्चिदस्ति अतएव परदेहेषु मां एव दूषयन्ति अभ्यसूयकाः परनिन्दकाः मामेव निन्दयन्तीत्यर्थः ॥ १८ ॥

एतदुक्तआसुरीभावमतयुक्तानां गतिं दर्शयति—
तानहमिति—श्लोकः ।

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरिष्वेव योनिषु ॥१९॥

॥ टीका ॥

ये परदुःखदायकाः तान् अहं अजस्रं सर्वदा आसुरीयोनिषु क्षिपामि अर्थात् परदुःखदायकरूपेण मां

सर्वत्रान्तर्यामिरूपमेव दूषयन्ति तानहमपि द्वेष्मी-त्यर्थः ॥ १६ ॥

तदुक्त आसुरीयोनिगतपुरुषाणां लक्षणमाह—

आसुरीमिति—श्लोकः ।

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥

॥ टीका ॥

तत्रापि आसुरीं योनिं प्राप्ताः सन्तः मूढा मां अ-प्राप्य वारं वारं अधमां गतिं प्राप्नुवन्तीत्यर्थः ॥२०॥

इदानीं अधमगतिस्थाननरकरूपमाह—त्रिविधमिति—

॥ श्लोकः ॥

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥

॥ टीका ॥

आत्मनाशनं आत्मज्ञाननाशनं नरकद्वारं त्रिविधं तदुक्तम् कामः क्रोधः लोभः तस्मादेतान् त्यजेत् ॥२१॥

एतदुक्तकामादित्रयदोषरहितपुरुषाणां लक्षणमाह—

एतैरिति—श्लोकः ।

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ।२२।

॥ टीका ॥

एतैः कामादिभिर्विमुक्तः सन् आत्मनः श्रेय आचरति तस्मात् परां गतिं परमेश्वरस्य गतिं प्राप्नोति ॥२२॥

अथ आत्मनः श्रेयोलक्षणं दर्शयति, य इति—

॥ श्लोकः ॥

यः शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥२३॥
तस्माच्छास्त्रं प्रमाणन्ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥२४॥

॥ टीका ॥

यः शास्त्रविधिं विना कर्म करोति तस्य सिद्धिर्न भवति सुखादिकञ्च न स्यादित्यर्थः ॥२३॥ तस्मात् शास्त्रप्रमाणविधिना कर्म कर्त्तव्यम् ॥ २४ ॥

इति श्रीमद्भगवद्गीताटीकायां श्रीपुरुषोत्तमदासकृतायां षोडशोऽध्यायः ॥ १६ ॥

इत्येवं देवासुरसम्पद्विभागमुक्त्वा शास्त्रानुसारकर्ममपि कथितं इदानीं स्वभावानुसार कर्म वर्णयति—

तत्रार्जुनः पृच्छति—अर्जुन उवाच—श्लोकः ।

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥१॥

सुगमार्थः ॥ १ ॥

तदुत्तरमाह—श्रीभगवानुवाच—श्लोकः ।

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥२॥
सत्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥३॥

॥ टीका ॥

देहिनां स्वभावानुसारेण सात्विकी राजसी तामसीति त्रिविधा भवति ॥२॥ सत्वनाम पृथक् पृथक् अन्तष्करणसङ्घात् पृथक् पृथक् श्रद्धा भवति अयं पुरुषः जीवः अन्तष्करणाधीनं भूत्वा यत् यत् श्रद्धां करोति स तत्तच्छ्रद्धानुसाररूपमेव ज्ञातव्यः अतएवाह श्रद्धामय इति भावार्थः ॥ ३ ॥

अथ तत्पृथक् श्रद्धारूपमाह—यजन्त इति—श्लोकः ।

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
प्रेतान् भूतगणाँश्चान्ये यजन्ते तामसा जनाः ॥४॥

॥ टीका ॥

सात्विकस्वभावयुक्ताः देवान् यजन्ते अतएव तेपि देवरूपा एव ज्ञेयाः, राजसाः स्वभावा यक्षरक्षांसि यजन्ते तेपि तद्रूपा एव ज्ञेयाः, तामसाः स्वभावाः भूतगणान् यजन्ते ते भूतरूपाः ज्ञेयाः पूर्वजन्मानुसारं वाइह वर्तमानजन्मानुसरं भगवन्माया दुर्विज्ञेया ॥ ४ ॥

तदेव मायां दर्शयति—अशास्त्रेति—श्लोकः ।

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥५॥

॥ टीका ॥

अहङ्कारसंयुक्तो जीवात्मा दम्भकामरागबलादिकं करोति अर्थात् अहङ्कारसङ्गात् दम्भदर्प्पयुक्तो भूत्वा अशास्त्रविहितं घोरं तप्यते इत्यर्थः ॥ ५ ॥

तदुक्तदर्पदम्भसङ्गात् आसुरिवृत्तिं दर्शयति—
कर्षयन्त इति—श्लोकः ।

कर्षयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तःशरीरस्थं तान् विद्धासुरनिश्चयान् ॥

॥ टीका ॥

ये अचेतसः भूतग्रामं स्थूलशरीरं तपोव्रतादिभिः कर्षयन्ति ते शरीरान्तस्थं मामेव कर्षयन्ति यथाह—

कारणरूपं कार्यस्थाने सर्वत्रव्याप्तोऽस्मि यदुक्तं रसोह-
मप्सु कौन्तेय इत्येवं प्रकारेण मामत्र दूषयन्ति ॥६॥

इदानीं आहारादिकर्माणां मायागुणानुसारेण भेद-
माह—अहारेति—श्लोकः ।

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥७॥

॥ टीका ॥

गुणानुसारसत्त्वा नाम अन्तष्करणं यदाह—सत्त्वा-
नुरूपा श्रद्धा इति यथा सत्त्वारूपान्तष्करेणानुसारेण
देवासुर-आराधनभेदं कथितं तथात्र सत्त्वानुसारेणैव
आहारादिभेदो वर्ण्यते ॥ ७ ॥

तत्र प्रथमं आहारभेदमाह—आयुरिति—श्लोकः ।

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याःस्निग्धाःस्थिराहृद्याआहाराःसात्त्विकप्रियाः॥

॥ टीका ॥

आहाराः आयुःसत्त्वादिविवर्धनाः रस्याः रसयुक्ताः
तण्डुलगोधूमादयः स्निग्धा घृतादियुक्ताः स्थिराः य-
द्भुक्त्वा पुनः शीघ्रं भोजनेच्छा न भवति तत् स्थिरान्नं
तत् अपक्कं न ज्ञेयं यस्मादाह हृद्याः परिपक्काः एते
आहाराः सात्विकानां पुरुषाणां प्रिया भवन्ति ॥८॥

इदानीं रजोगुणयुक्तानामाहारं वर्णयति, कट्विति—

॥ श्लोकः ॥

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥९॥

॥ टीका ॥

कटुनिम्बादिवृक्षाणां पत्रपुष्पफलादियुक्तव्यञ्जनं अम्लं तक्रधात्र्यादयः अतिलवणं अत्युष्णं तीक्ष्णं अतिमरीच्यादिसंयुक्तं रुक्षशुष्कान्नंदाहिन केवलवह्निपकादय आहारा राजसां श्रेष्टाः तत्फलमाह—दुःखं शोकं रोगं ददतीत्यर्थः ॥ ९ ॥

तामसानामाहारमाह—यातयामेति—श्लोकः ।

यातयामं गतरसं पूतिपर्य्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्॥१०॥

॥ टीका ॥

भोगेसिद्धेपि प्रहरान्ते रुचिं करोति गतरसं रसवर्जितं पूति दुर्गन्धं पलाण्डाल्वादिपर्य्युषितं पूर्वरात्रपक्कं उच्छिष्टं अमेध्यं च मांसादिभोजनं तामसानां प्रियं भवति ॥ १० ॥

इदानीं यज्ञस्य त्रिविधारुचिं वदति—अफलेति—

॥ श्लोकः ॥

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥११॥
अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥१२॥
विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥

॥ टीका ॥

फल[illegible]ल्परहितं तथा वेदाविधिपूर्वकं व्यष्टिव्यमनसः व्यष्टिव्यं नाम अनेकदेशभ्रममाणस्य मनसः समाधाय एकत्रस्थितिहेतुं यत् करोति स सात्विकः ॥११॥ तथा फलानुसन्धानं कृत्वा दम्भार्थनिजकृत्यविशिष्टमानार्थे यत् यज्ञं स राजसः ज्ञेयः॥ १२ ॥ तथा वेदविधिहीनं शुद्धान्नरहितं मन्त्रदक्षिणाश्रद्धारहितं तामसं॥

इदानीं कायिकामानसिकावाचिकाःत्रिविधाःतपस्या वदन्ति तेषां गुणभेदरूपमपि वर्णयति, देवद्विजेतिषड्भिः—श्लोकः ।

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥१४॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥१५॥
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥१६॥
श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥१७॥
सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥१८॥
मूढग्राहेणात्मनो यत् पीडया क्रियते त[illegible] ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥१९॥

॥ टीका ॥

देवादीनां पूजनं शौचं यथामृत्तोयादिभिर्यथाविधं शौचं शास्त्रेषु वर्णितं आर्जवं कोमलशरीरत्वं अर्थात् मल्लयुद्धादिशिक्षारहितं ब्रह्मचर्य्यं द्विधा वाणप्रस्थानां स्त्रीत्यागरूपं, गृहस्थानां ऋतुकालव्यतिरिक्तस्त्रीसेवनं न कर्त्तव्यं अहिंसा परदुःखदायकरहितत्वं इत्येवं शारीरं तपः कथ्यते ॥ १४ ॥ अनुद्वेग नाम प्राणगति श्रम-मन्दमध्यमपञ्चमादित्रयग्रामयुक्तं सत्यं यथार्थरूपं प-रस्य हितकारकं वाक्यं परस्य प्रियकारकमर्थयुक्तं स्वा-

ध्यायाभ्यसनं नियमयुक्तवेदाध्ययनं एतदेव वाङ्मयवचनशुद्धिहेतुतपस्या ॥ १५ ॥ मनसः प्रसन्नयुक्तं सौम्यत्वं मनसः चञ्चलवृत्तिरहितत्वं मौनं नाम भगवत्कीर्त्तनं विनालापे मौनं भवति आत्मविनिग्रहः अहं भावरहितं तत्रापि तत्वविचारेण शुद्धभावनायुक्तत्वं इति मानसं तपः उच्यते ॥ १६ ॥ उक्त त्रिविधं तपः सात्विकादिगुणसङ्गात् भेदरूपेण वर्ण्यते श्रद्धयेति अर्थात् वेदशास्त्रे विश्वासयुक्तो यः तपसि परायणो भवति अचलश्रद्धया युक्तैर्नरैः यत् पूर्वोक्तं शारीरादितपस्त्रयं फलसङ्कल्परहितं क्रियते स एव तपः सात्विकस्तपो ज्ञेयः ॥१७॥ तथा सत्कारं नाम आदरार्थं मानं महत्वप्राप्त्यर्थं पूजनदक्षिणार्थं उक्त तपस्त्रयं दम्भेन क्रियते तदेव चलरूपं अध्रुवं नश्यमानं तपः राजसं कथ्यते ॥ १८ ॥ मूढग्राहेण मूढभावेन देहाभिमानरूपेण तथा शरीरस्य पीडायुक्तेन परस्योत्सादनार्थं अन्यस्य विनाशार्थं यत्तपः तत् तामसं कथ्यते ॥१९॥

इदानीं दानमपि त्रिधा वर्णयति, दातव्यमिति—

॥ श्लोकः ॥

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्राजसमुदाहृतम् ॥२१॥
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥

॥ टीका ॥

दातुं योग्यं दातव्यं यथा वत्सदुग्धादियुक्तं गोदानं एवं सर्वदानेषु विचारणीयं अनुपकारिणे नाम उपकाररहितदूरस्थाय अज्ञाताय दातव्यं देश तीर्थादिषु काले वशन्तऋतौ पात्रे सर्वाङ्गसम्पूर्णे सन्ताषयुक्त यद्दीयते तद्दानं सात्विकं भवति ॥ २० ॥ प्रत्युपकार नाम निजउपकारार्थं वा स्वर्गादिफलप्राप्तिहेतु तथा परिक्लिष्टं क्लेशयुक्तं यत् तत् राजसं भवति ॥ २१ ॥ अदेशकाले नाम देशकालविचारं विना अपात्रेभ्यः कुकर्मिभ्य असत्कृतं नाम पूजासत्कारमानं विना अवज्ञातं भावभक्तिं विना दानं तामसं कथितं ॥ २२ ॥

इदानीं कर्मप्रवृत्तौ समाप्तिपर्य्यन्तलक्षणमाह—

ओमिति—श्लोकः ।

ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥२३॥

॥ टीका ॥

पुराब्राह्मणाः ओं तत्सत् इति ब्रह्मणस्त्रिविधनिर्देशात् वेदयज्ञादिकर्मसु प्रवृत्ता अर्थात् त्रिविधशब्दरूपब्रह्मसकाशात् पुराब्राह्मणाः कर्मसु प्रवृत्ताः ॥ २३ ॥

तदेव दर्शयति—तस्मादिति—श्लोकः ।

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥२४॥

॥ टीका ॥

तस्मात् ओं इत्युच्चारणद्वारा यज्ञदानतप इति त्रयकर्मसु प्रवृत्तिर्भवति ॥ २४ ॥

तत् शब्दस्य निमित्तलक्षणमाह—तदिति—

॥ श्लोकः ॥

तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाःक्रियन्ते मोक्षकाङ्क्षिभिः ।२५।

॥ टीका ॥

मुमुक्षुपुरुषाः फलानुसन्धानरहिताः तत् शब्देन यज्ञादिकर्म कुर्वन्ति अर्थात् तत् श्रीविष्णुऽर्पणं भवतु ॥

सत् शब्दस्य लक्षणमाह—सद्भावेइति—श्लोकः ।

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥२६॥

॥ टीका ॥

साधुभावेन कर्माणि साधनार्थे सत् शब्दो युज्यते प्रशस्ते कर्मणां श्रेष्ठत्वविज्ञापनार्थमित्यर्थः ॥ २६ ॥

अथ तत् शब्दस्य विशेषत्वं पुनर्दर्शयति, यज्ञेइति—

॥ श्लोकः ॥

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥२७॥

॥ टीका ॥

यज्ञादित्रिकर्मस्थितिहेतु सत् शब्दःउच्यते अतएव तदर्थीयं नाम सत् हेत्वर्थकर्मकर्त्तव्यं सदर्थकर्मसुच्यते इत्यर्थः ॥ २७ ॥

इदानीं असत् नाम अश्रद्धकर्मलक्षणमाह—

अश्रद्धयेति—श्लोकः ।

अश्रद्धया हुतं दत्तं तपस्तप्तं च यत्कृतम् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥२८॥

॥ टीका ॥

श्रद्धारहितं यत्कर्म तदसदुच्यते न इह नामुत्र फलदायकः अतएव वृथा भवति ॥ २८ ॥

इति श्रीमद्भगवद्गीताटीकायां श्रीपुरुषोत्तमदास-
कृतायां सप्तदशोऽध्यायः ॥ १७ ॥

इत्येवं भगवदुक्तकर्मनिर्देशं श्रुत्वा त्यागस्य च पुनः संन्यासस्य लक्षणं पृच्छति—

अर्जुन उवाच—श्लोकः ।

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च हृषिकेश पृथक्केशिनिषूदन ॥ १ ॥

॥ टीका ॥

सुगमार्थः ॥ १ ॥

एतदुत्तरमाह—श्रीभगवानुवाच—श्लोकः ।

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥२॥

॥ टीका ॥

काम्यानां कर्मोद्भवं यत्फलं तदेव काम्यं तेषां कामोद्भवफलानां तथा कर्मणामपि ये त्यजन्ति तदेव संन्यासमुच्यते तथा ये फलं त्यजन्ति न कर्म तत् त्यागः कथ्यते ॥ २ ॥

अथोक्तत्यागस्य लक्षणमाह—त्याज्यमिति—श्लोकः ।

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपः कर्म न त्याज्यमिति चापरे ॥ ३ ॥

॥ टीका ॥

मनीषिणः विचारवन्तः पुरुषाः कर्मवासनां पुन-

जन्मदायकत्वात्कर्म त्याज्यमिति वदन्ति अपरे अन्यमनीषिणः न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् अर्थात् जातु जनः क्षणमपि अकृतकर्मा न तिष्ठति एतत्साक्षात्कारमतेन यज्ञदानानि कर्म न त्यजन्ति किन्तु तत्फलमेव त्यजन्तीति भावः ॥ ३ ॥

तर्हि पक्षद्वयमध्ये किं कर्त्तव्यं तदाह—निश्चयमिति—

॥ श्लोकः ॥

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥४॥

॥ टीका ॥

भरत नाम राजकुले सत्तमः श्रेष्ठः तथा पुरुषेषु अपि श्रेष्ठः पुरुषव्याघ्रः यथा बने व्याघ्रः श्रेष्ठः तथा अन्तष्करणपुरुषस्थाने बुद्ध्यादिक्षेत्रात् क्षेत्रज्ञजीवात्मा एव श्रेष्ठः तत्र त्यागविषये मे निश्चयं शृणु तदेव त्यागः त्रिविधो भवति ॥ ४ ॥

अथात्याज्यविषयेन आह—यज्ञेति—श्लोकः ।

यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥५॥

॥ टीका ॥

यज्ञदानतपांसि एतत्कर्म न त्याज्यं एतानि कर्माणि

मनीषिणां पावनानि पवित्रकारिणीत्यर्थः अर्थात् कर्त्तव्यान्येवेति भावः ॥ ५ ॥

यज्ञादिकर्त्तव्येकर्मणिश्रेष्ठत्वमाह—एतान्यपीति—

॥ श्लोकः ॥

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥६॥

॥ टीका ॥

एतानि यज्ञादिकर्माणि फलरूपं सङ्गं त्यक्त्वा निश्चितमेव कर्त्तव्यानि इति उत्तमं मतम् ॥ ६ ॥

इदानीं तत्त्यागं गुणभेदरूपेण त्रिविधं दर्शयति—नियतस्येति—श्लोकः ।

नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥७॥
दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥८॥
कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः॥९॥

॥ टीका ॥

यत्पूर्वश्लोके फलसङ्गं त्यक्त्वा कर्मकर्त्तव्यमित्युक्तं तदेवात्र दर्शितः नियतस्य संन्यासः तस्य कर्मणफलं

नोपपद्यते अर्थात् कर्मबन्धनं न भवति अतएव नियमतः तस्य संन्यासो ज्ञेयः मोहात् त्यागः तामसः किन्तु कर्मबन्धकारीति ज्ञात्वा त्यजति स तामसः त्यागः इत्यर्थः ॥ ७ ॥ प्रकाशे सिद्धिहानिःस्यादिति बचनात्पिताभ्रातादिजनात् परोक्षमतेन कर्म करोति तदेव दुःखरूपं इति ज्ञात्वा अथवा कायक्लेशभयात् त्यजति स राजसः त्यागः नैव त्यागो भवति किन्तु फलं लभेत ॥ ८ ॥ कार्य इत्येव कर्त्तव्यं इति ज्ञात्वा यत् नित्यनैमित्तादिकर्म करोति तस्य सङ्गं कर्त्तृत्व अहङ्कारभावं त्यक्त्वा तथा फलमपि त्यक्त्वा यत्क्रियते तत् सात्विकं त्यागं ज्ञयमित्यर्थः ॥ ९ ॥

इत्येवं गुणानुसारं कर्म वर्णयित्वा इदानीं वेदशास्त्रानुसारशुद्धकर्म वर्णयति—न इति—श्लोकः ।

न द्वेष्ट्यकुशलं कर्म कुशलेनानुषज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः॥१०॥

॥ टीका ॥

यथा वेदेन वर्णाश्रमादिधर्मकर्म वर्णितं तत्र पितृयज्ञे यदामिषं निरूपितं तदकुशलं कर्म प्रति यः न द्वेषं करोति तथा देवयज्ञे यत्स्वर्गादिफलं वर्णितं तत् कुशलरूपं कर्म नानुसज्जते न संगृह्यते एवं सत्वसमा-

विष्टः अन्तष्करणयुक्तः त्यागी स मेधावी मुक्तशंसय इत्यर्थः ॥ १० ॥

गुणभेदानुसारं त्यागं वर्णयित्वा इदानीं यथार्थत्यागं वर्णयति—नहीति—श्लोकः ।

नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥११॥

॥ टीका ॥

देहभृतां कर्म त्यक्तुं नहि शक्यं अतएव यः कर्मफलं त्यजति स एव त्यागी कथ्यते ॥ ११ ॥

त्यागश्च संन्यासश्च इत्यर्जुनप्रश्नयोर्द्वयोः त्यागो निवेदितः सम्यक् संन्यासो वर्ण्यतेऽधुना—

अनिष्टमिति—श्लोकः ।

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥

॥ टीका ॥

कर्मणः त्रिविधं फलं भवति तत्र यत्कर्मसङ्गात् अधोगामी भूत्वा पश्वादियोनिषु भवति तदनिष्टं फलं ज्ञेयं यत्कर्मद्वारा ऊर्द्धगामी भूत्वा देवादियोनिषु भुङ्क्ते तदनिष्टं फलं यत्कर्मद्वारा मध्यगामी भूत्वा पुनर्मनुष्य-

योनिर्भवति तत् मिश्रं फलं एतत्त्रिविधं फलं कर्मऽत्यागिनां भवति संन्यासिनां न भवतीत्यर्थः ॥ १२ ॥

अथ संन्यासिनां विशेषलक्षणमाह—पञ्चैतानीति—

॥ श्लोकः ॥

पञ्चैतानि महाबाहो कारणानि निबोध मे ।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥

॥ टीका ॥

कर्मणःकृतस्यान्ते सांख्ये संन्याससाधने पञ्चकारणानि जानीहि यत्पंचकारणद्वारा कर्मणां सिद्धिर्भवति कृतस्य अन्ते यत्सन्यासं तत्प्रमाणमाह—आदौ सवर्णाश्रमवर्णितःक्रियाः कृत्वा समाधिः शुद्धमानसः समाप्य तत् सर्वमुपात्वसाधन समाश्रयेत्सद्गुरुमात्मलब्धये इति ॥ १३ ॥

संन्याससाधने पंचकारणां पृथक् नामानि आह—
अधिष्ठानमिति—श्लोकः ।

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥१४॥

॥ टीका ॥

अधिष्ठानं स्थूलशरीरं कर्ता अहङ्कारं करणं पञ्च पृथक् कर्मेन्द्रियाणि चेष्टारूप पृथक् ज्ञानेन्द्रियाणि दैवं इन्द्रियाणामधिष्ठातृदेवता इति पंचकर्मस्य कारणानि ॥१४॥

उक्त पञ्चकारणानां क्रियामाह—शरीरेति—श्लोकः ।

शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥१५॥

॥ टीका ॥

अधिष्ठानादिपंचद्वारा सर्वकर्माणि भवन्तीति भावः तत्र न्यायं शास्त्रोक्तं कर्मं विपरीतं शास्त्रविरुद्धं वा यत्कर्म मनसा वाचा देहेन जीवात्मा प्रारभते पंचैते हेतवः उत्पत्तिस्थानाः स्युः ॥ १५ ॥

उक्तपञ्चस्थानेषु आत्मतत्वं दर्शयति—तत्रैवेति—

॥ श्लोकः ॥

तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥१६॥

॥ टीका ॥

तत्र पंचकारणस्थाने आत्मापि अस्ति तदात्मानं एव केवलकर्तारं यः मन्यते स दुर्मतिः आत्मतत्वं न पश्याति ॥ १६ ॥

तर्हि किं विचारणीयं तदाह—यस्येति—श्लोकः ।

यस्य नाहं कृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमाँल्लोकान् न हन्ति न निबध्यते ॥१७॥

॥ टीका ॥

यस्य अहं कर्ता इति भावं नास्ति तथा अर्तृत्व विषयेपि बुद्धिलोपं न भवति अर्थात् सत्कर्मेपि कर्ता न भवति स इमां लोकान् हत्वापि न हन्ता हनन-दोषेन बाध्यते इत्यर्थः ॥ १७ ॥

इदानीं कर्मस्य लक्षणमाह—ज्ञानमिति—श्लोकः ।

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
करणं कर्म कर्त्तेति त्रिविधः कर्मसंग्रहः ॥१८॥

॥ टीका ॥

ज्ञानं विवेकं तद्द्वारा ज्ञेयं यज्जाननीयं तत् ज्ञान-युक्तज्ञाता पुरुषाः इति त्रिविधं कर्मणामुदयं भवति करणं यद्द्वारा कर्म करोति कर्तृत्वरूपं कर्म तथा कर्ता इति त्रिविधः कर्मस्य संग्रहरूपमित्यर्थः ॥ १८ ॥

तदुक्तकर्मलक्षणं मध्ये त्रिविधं मूलकारणं वदति—
ज्ञानमिति—श्लोकः ।

ज्ञानं कर्म च कर्त्ता च त्रिधैव गुणभेदतः ।
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि॥१९॥

॥ टीका ॥

सत्वादिगुणभेदेन ज्ञानकर्म कर्त्ता इति त्रिधा एव यथा भवति तथा श्रृणु ॥ १६ ॥

सात्विकिज्ञानमाह—सर्वेति—श्लोकः ।

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्विकम् ॥

॥ टीका ॥

सर्वभूतेषु ब्रह्मस्तम्भपर्यन्तेषु सर्वत्रज्ञानविचार-द्वारा एक एव आत्मानं पश्यति भिन्नदेहेषु अभिन्न-रूपं यः पश्यति तत् सात्विकं ज्ञानं विद्धि ॥ २० ॥

राजसं ज्ञानमाह—पृथगिति—श्लोकः ।

पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥२१॥

॥ टीका ॥

द्रष्टारूपेण आत्मा सर्वदेहे भिन्नभिन्नरूपेण वर्तते एवं ज्ञानं राजसं भवति ॥ २१ ॥

तामसं ज्ञानमाह—य इति—श्लोकः ।

यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च यत्तामसमुदाहृतम् ॥२२॥

॥ टीका ॥

गुरुदत्तोपदेशद्वारा कृत्स्नं नाम सावयवत् एकएव आत्मा मन्यते तत्वविचारव्यतिरिक्तं अल्पवन्मन्यते तत् तामसं ज्ञानम् ॥ २२ ॥

इत्येवं ज्ञानभेदमुक्त्वाकर्मभेदं वर्णयति–नियतमिति—

॥ श्लोकः ॥

नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तसात्त्विकमुच्यते ॥२३॥

॥ टीका ॥

नियतं कर्त्तव्यकर्म सङ्गरहितं अहङ्कारशून्यं अरागं फलकाङ्क्षारहितं तथान्यप्रति द्वेषरहितं अत्यनुरागरहितं सात्विकं कर्म कथितं ॥ २३ ॥

राजसं कर्ममाह—यदिति—श्लोकः ।

यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥२४॥

॥ टीका ॥

फलइच्छाहेतु यत्कर्म तथा अहं कर्तृत्वभावेन बहु आयासेन वा यत् कर्म क्रियते तत् राजसं कर्म कथ्यते इत्यर्थः ॥ २४ ॥

अथ तामसकर्ममाह—अनुबन्धेति—श्लोकः ।

अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म तत्तामसमुदाहृतम् ॥२५॥

॥ टीका ॥

अनुबन्ध नाम वारं वारं जन्मजन्मान्तरफलेच्छां

क्षयं शत्रुक्षयहेतुपश्वादिहिंसायुक्तं पौरुषं अदृष्ट्वा योग्यायोग्यविचाररहितं अतएव मोहात् अज्ञानात् यत्कर्म तत्तामसं कथ्यते ॥ २५ ॥

सत्वादिगुणैः कर्तारमपि त्रिधा वर्णयति—मुक्तसङ्गेति—

॥ श्लोकः ॥

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते॥२६॥

॥ टीका ॥

धृतिविचारउत्साहयुक्तः फलानुसन्धानमुक्तः कर्तृत्वभावरहितः सिद्धिमसिद्धिं समं ज्ञातिसन्तोषयुक्तः सात्विकः कर्ता ज्ञेयः ॥ २६ ॥

राजसी कर्तारमाह—रागीति—श्लोकः ।

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्त्तितः ॥२७॥

॥ टीका ॥

अत्यन्त अनुरागयुक्तं फलइच्छायुक्तं लोभयुक्तं हिंसा निजदेहस्य अन्यस्य वा क्लेशकारी अशुचिः पवित्रकर्मरहितं सिद्धौ हर्षं असिद्धौ विषादं एतादृशः कर्ता रजोगुणयुक्तएव कथ्यते इत्यर्थः ॥ २७ ॥

तामसीकर्तालक्षणमाह—अयुक्तेति—श्लोकः ।

अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥२८॥

॥ टीका ॥

अयुक्तः अयोग्यः प्राकृतः साधारणबुद्धिः स्तब्धः अन्यस्य वचनमप्रतिपालकः शठो वञ्चकः नैष्कृतिकः कृतिरहितबुद्धिः अलसः उद्योगरहितः कर्मसाधने विषादी श्रमबुद्धिः स्वल्पकर्ममपि दीर्घकालेन करोति तामसः कर्ता कथ्यते ॥ २८ ॥

इदानीं सत्त्वादिगुणभेदेन बुद्धेः तथाधृतेस्त्रिविधलक्षणमाह—बुद्धेर्भेदमिति—श्लोकः ।

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥२९॥

॥ टीका ॥

सुगमार्थमेव ॥ २६ ॥

सात्विकीबुद्धिलक्षणमाह—प्रवृतिमिति—श्लोकः ।

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥

॥ टीका ॥

धर्मादित्रिवर्गसाधने प्रवृतिः तत्साधने यत् कार्य-

मकार्यं कर्तव्यं अकर्तव्यं अकर्तव्येन भयं कर्तव्येन अभयं तथा निवृत्तिः मोक्षसाधनहेतुः तत्रापि कार्याकार्ये भयाभयं उक्त उभौ प्रवृतिनिवृतिपक्षबन्धमोक्षं वेत्ति एतादृशविचारवती बुद्धिः सा सात्विकी ॥३०॥

राजसीबुद्धिमाह—ययेति—श्लोकः ।

यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ।३१।

॥ टीका ॥

धर्माधर्मं अयथावत् जानाति संचितं आगामी कर्मफलं मिथ्या मन्यते अर्थात् अग्रे पश्चान्नकिंचिदस्ति वर्तमानमेव सत्यं इति राजसी ॥ ३१ ॥

तामसीबुद्धिमाह—अधर्मेति—श्लोकः ।

अधर्मं धर्ममिति या मन्यते तमसावृता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥

॥ टीका ॥

वर्णाश्रमादिधर्मं अधर्मं मन्यते तद्रहितं अधर्मं धर्मं मन्यते सर्वार्थान् विवाहादिसर्वकर्मसु विपरीता बुद्धिः तामसी ज्ञेया ॥ ३२ ॥

अथ सात्विकीधृतिमाह—धृत्येति—श्लोकः ।

धृत्या यया धारयते मनः प्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्विकी ॥

॥ टीका ॥

यया धृत्या मन प्राण इन्द्रियक्रिया धारयते मनसः सङ्कल्पं विकल्पं प्राणस्य क्षुत्तृड्स्पृहा इन्द्रियाणां भोगे कर्मे विक्षेपता उक्त सर्वं योगेन आसनप्राणामादिसाधनयुक्तेन अविभिचारं द्विधा ज्ञाने च भक्तियोगे च इति एतदुक्तमनआदित्रयवृत्तिं धारयति सा सात्विकी धृतिः स्मृता ॥ ३३ ॥

राजसी धृतिमाह—ययेति—श्लोकः ।

यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥३४॥

॥ टीका ॥

फलयुक्तधर्मादीन् धारयति सा राजसी धृतिः ॥३४॥

तामसीधृतिमाह—ययेति—श्लोकः ।

यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥३५॥

॥ टीका ॥

दुष्टा बुद्धिर्यया धृत्या स्वप्नादीनि न विमुञ्चति सा तामसी ज्ञेया ॥ ३५ ॥

इदानीं गुणभेदा त्रिविधं सुखमाह—सुखमिति—

॥ श्लोकः ॥

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
अभ्यासद्रमते यत्र दुःखान्तं च निगच्छति ॥३६॥

॥ टीका ॥

निजनिजस्वभावस्य यद्यत् सुखं तत्तदभ्यासेन रममाणः सन् तस्य निज निज दुःखं गच्छति ॥ ३६ ॥

तत्र सात्विकसुखमाह—यदिति—श्लोकः ।

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥

॥ टीका ॥

अग्रे विषं परिणामे अमृतं आत्मविचारबुद्धिप्रसादेन जायमानं सात्विकं सुखं ज्ञेयं परिणामे सुखं दृष्ट्वा वर्तमाने दुःखं न मन्यते अर्थात् देहादिदुःखसङ्गात् परिणामे मुक्तिरूपं सुखं दर्शयति एतदेव सात्विकं सुखं॥

राजसं सुखमाह—विषयेन्द्रियेति—श्लोकः ।

विषयेन्द्रियसंयोगात् यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥३८॥

॥ टीका ॥

अग्रे विषयभोगसङ्गात् सुखं मन्यते परिणामे जन्ममरणादिदुःखं न ज्ञायते इत्येवं राजसं सुखं ॥३८॥

तामसं सुखमाह—श्लोकः ।

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥३९॥

॥ टीका ॥

आत्मनःमोहनरूपे यत्सुखं यदग्रे अनुबन्धरूपे च आत्मनः मोहनरूपाज्ञानेन निंद्रालस्यादिविवादेन यत् सुखं तत्तामसं ॥ ३९ ॥

अथोक्तकथनस्य प्रयोजनमाह—नेति—श्लोकः ।

न तदस्ति पृथिव्यां वा दिवि वेदेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिःस्यात्त्रिभिर्गुणैः ॥४०॥

॥ टीका ॥

दिविलोके यत् देवैः पृथिव्यां मनुष्यैः प्रकृतिजगुणलक्षणात् कोपि न मुक्तो भवति इत्यर्थः ॥ ४० ॥

तदवाह—ब्राह्मणेति—श्लोकः ।

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥

एतदेव वर्णयति—शम इति—श्लोकः ।

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥

॥ टीका ॥

शमो मननिग्रहः दमः वाह्येन्द्रियनिग्रहः तपः स्वधर्मानुष्ठानं शौचं वाह्यात् स्नानादिभिः अन्तरं कामादित्यागं शौचं क्षान्तिः क्षमा आर्जवं कोमलहृदयत्वं परदुःखे द्रवतीति भावः ज्ञानं शास्त्रोक्तं विज्ञानं विशेषबुद्धियुक्तं आस्तिक्यं परमेश्वर अस्ति इति दृढनिश्चयं इति सत्वगुणप्रधानब्राह्मणस्य स्वभावजं कर्म इत्यर्थः ॥

क्षत्रियकर्म आह—शौर्यमिति—श्लोकः ।

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्मस्वभावजम् ॥४३॥

॥ टीका ॥

शौर्यं शूरवीरत्वं तेजो वाह्वास्फोटनं धृतिर्दुःखादिसहनं दाक्ष्यं चातुर्यं युद्धे अपलायनं न पृष्ठं दर्शयितव्यं दानं ब्राह्मणादीनां दुःखनिवारणं ईश्वरभावं निजसप्तप्रकृतेर्वशं न भवति साम्यामात्यादिसप्तप्रकृतयः राज्ञां सन्ति एतत् क्षत्रियाणां स्वभावजं कर्म कथ्यते ॥ ४३ ॥

विशां कर्म आह—कृषीति—श्लोकः ।

कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥४४॥

॥ टीका ॥

परिचर्या त्रैवर्णिकानां सेवा अन्यत्सुगमार्थः ॥४४॥

इदानीं निज निज धर्मस्य फलमाह—स्वे इति—श्लोकः ।

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥४५॥

॥ टीका ॥

निजधर्मकर्मरतः पुरुषो यथा सिद्धिं प्राप्नोति तथा शृणु ॥ ४५ ॥

तदेव कथयति—यत इति—श्लोकः ।

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥

॥ टीका ॥

स्व स्वधर्मनिष्ठायुक्तपुरुषाणां स्वस्वधर्मानुसारं यत् यत् प्रवृत्तिः तत्तत्प्रवृतिद्वारा सर्वगतं ब्रह्मादिपर्यन्त-मन्तर्यामिरूपं आराधतः सन् सिद्धिं प्राप्नोति ॥४६॥

तदुक्तस्वकीयधर्मस्य विशेषमाख्यानं करोति—
श्रेयानिति—श्लोकः ।

श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥४७॥

॥ टीका ॥

परधर्मात् ब्राह्मणादीनां वेदानुष्ठितात् धर्मात् शूद्रादिकानां स्वधर्मों विगुण अपि श्रेष्ठः स्वभावनियतं स्वधर्मविहितं कर्म कुर्वन्सन् किल्विषं पापं न प्राप्नोति अर्थात्कर्मवासनात् मुक्तो भवति ॥ ४७ ॥

इदानीं स्वधर्मेण गुणं परधर्मेण दोषं दर्शयति—

सहजमिति—श्लोकः ।

**सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।**
**सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥४८॥**

॥ टीका ॥

सहजं नाम स्वधर्मकर्म दोषयुक्तमपि न त्यजेत् निजधर्मं त्यक्त्वा परधर्मग्रहणे दोषमाह—सर्वारम्भेति यथा पूर्वकाष्ठगताग्निं त्यक्त्वा अन्यकाष्ठयुक्तमग्निं प्रज्वालयन् पूर्ववह्निवत् धूमेन सहितोग्निरुत्पद्यते तथा हि पूर्वाभिमानं त्यक्त्वा अन्याभिमानं गृह्णाति इत्यर्थः ॥

तर्हि यत्कर्त्तव्यं तदेवाह—असक्तबुद्धिरिति—श्लोकः ।

**असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।**
**नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥**

॥ टीका ॥

पूर्वोक्ताभिमानयुक्तः पुरुषः सर्वत्र स्वर्गादिकामना-

रहितबुद्धिं कुर्यात् अतएव जितात्मा मनसो विजय-रूपेण विगतस्पृहो भवति ततो नैःकर्मरूपेण काम-नारहितेन संन्यासे सिद्धिर्भवति ॥ ४९ ॥

तत् सिद्धेर्लक्षणमाह—सिद्धिमिति—श्लोकः ।

सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे ।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥५०॥

॥ टीका ॥

यथा अकर्ता अभोक्ता मतेन आत्मा ब्रह्मरूपे यथा सिद्धिं प्राप्नोति तथा मे मदीयप्रकाशात् त्वं निबोधं कुरु अर्थात् परा निष्ठारूपं ब्रह्मसिद्धिज्ञानं संक्षेपेण शृणु ॥

तदेवाह—बुद्ध्येति—श्लोकः ।

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥

॥ टीका ॥

निष्कामबुद्ध्या यदा बुद्धिः मनसि निष्कामा भवति तदा आत्मतत्त्वधारणे नियमं करोति तन्नियममाह—शब्दादिशब्दस्पर्शरूपरसगन्धाः पञ्चविषयाः यद्बा-ह्यात् अन्तष्करणे प्रवेशं कुर्वन्ति तत् त्यजति तत्त्य-जनलक्षणमाह—रागद्वेषौ इति अर्थात् शब्दादीना-मुत्तमविषये अनुरागं न करोति, अधमविषये न द्वेषं करोति ॥ ५१ ॥

अथोक्तरागद्वेषत्यागस्य लक्षणमाह—विविक्तसेवीति—

॥ श्लोकः ॥

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥५२॥

॥ टीका ॥

तस्य विविक्तस्थाने स्थितः सन् वाक्कायमनोभ्यः यतति अर्थात् वृथा वादोच्चारणं न करोति तथा कायद्वारा गमनादिक्रियारहितो भवति मनसः सङ्गात् सङ्कल्पविकल्परहितो भवति इत्येवं वाह्यानुरागं त्यक्त्वा ध्यानयोगपरो भवति यथा पंचदशाध्याये क्षराक्षराभ्यां अतीतः पुरुषोत्तमस्स्वरवः कथितः तदेव ध्यायति इत्यर्थः ॥ ५२ ॥

अथोक्तध्यानस्य लक्षणमाह—अहङ्कारमिति—

॥ श्लोकः ॥

अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते॥५३॥

॥ टीका ॥

अहङ्कारं अहं त्वं तव मम इत्यहङ्काराश्रितभावं बलं ज्ञानस्य बलं दर्पं ज्ञातृत्वपक्षे यद्दर्पं कामं क्रोधं यद्द्वैतभावेन कामं क्रोधं भवति परिग्रहं त्यागं ग्रहणं

अथवा परिग्रहं विवादादिग्रहणं एतान् सर्वान् त्यक्त्वा निर्ममत्वभावेन शान्तः सन् ब्रह्मभावं प्राप्नोति अहं ब्रह्मेति मन्यते ब्रह्मभूतो भवतीत्यर्थः ॥ ५३ ॥

अथ ब्रह्मभूतस्य लक्षणमाह—ब्रह्मभूतेति—श्लोकः ।

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥५४॥

॥ टीका ॥

स ब्रह्मभूतः पुरुषः जन्ममरणादिहेतुं न शोचति मुक्तिहेतुं न काङ्क्षति सर्वभूतेषु समदृष्टियुक्तः मदीय परां भक्तिं प्राप्नोति ॥ ५४ ॥

तद्भक्तेर्लक्षणमाह—भक्त्येति—श्लोकः ।

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥५५॥

॥ टीका ॥

भक्तिप्रियः लक्षणयुक्तो भवति तदेव प्रियसगुणनिर्गुणपक्षसङ्गात् भेदरूपेण वर्त्तते तदेव सगुणनिर्गुणौ मदीयप्रकृतिरूपौ मदधीनौ उक्तप्रियस्य भेदरूपं परमेश्वराधीनत्वं च तत्सर्वं सप्तमादारभ्य पंचदशाध्यायपर्य्यन्तं विस्तरेण वर्णितं तस्मादाह—भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः अर्थात्सगु-

णनिर्गुणौ मत्प्रकृतित्वात्सर्वं मामेव जानाति मद्व्यतिरिक्तनान्योस्तीति तत्वतः तदेव सगुणनिर्गुणभेदानन्दनिजनिजप्रियद्वारेण गृह्यते ततो मां तत्त्वतः ज्ञात्वा ततः तत्प्रियद्वाराभेदरूपं गृह्यते इत्यत्र तद्भेदप्रियरूपं मदीयं ज्ञास्यते न त्वुभयोरुपासकयोः किन्तु तदुभौ उपासकौ मत्प्रियरूपत्वात् इत्येवं तत्त्वतः ज्ञात्वा निजभेदरूपं प्रियं त्यक्त्वा उभौ उपासकौ मयि परमानन्दस्वरूपे विशतः अर्थात् सगुणनिर्गुणरूपौ उभौ उपासकौ एव एतदुभवावपि मां परमानन्दस्वरूपं सर्वनियन्तारं प्रविशत इत्यर्थः ॥ ५५ ॥

अथ भगवद्भक्तिप्राप्तिहेतुमाह—सर्वेति—श्लोकः ।

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥५६॥

॥ टीका ॥

सर्वकर्माणि अन्यफलवासनां त्यक्त्वा ये मदाश्रयहेतु कुर्वन्ति ते मत्प्रसादात् शाश्वतं नित्यानन्दपदं प्राप्नुवन्ति ॥ ५६ ॥

तदेव निश्चयहेतु पुनर्दर्शयति—चेतसेति—श्लोकः ।

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥५७॥

॥ टीका ॥

स्मृतिविस्मृतिलक्षणौ चित्तेन वर्त्तेते तस्माद्विस्मृति लक्षणं त्यक्त्वा स्मृतिलक्षणद्वारा सर्वकर्माणि मत्प्राप्तिहेतु मदर्पणं कुरु अतएव बुद्ध्या विचारयुक्तो भूत्वा सततं मच्चित्तो भव सर्वदा मम स्मरणं कुरु ॥ ५७ ॥

तत्स्मादगुणफलमाह—मच्चित्तेति—श्लोकः ।

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनंक्ष्यसि ॥५८॥
यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥

॥ टीका ॥

अतएव मच्चित्तः सन् मत्प्रसादात् दुर्गाणि सर्वसङ्कल्पानि तरिष्यसि ॥ ५८ ॥ अथेत्यनन्तरं त्वं यदि अहङ्कारवशेन मद्वचनं न श्रोष्यसि तर्हि विनंक्ष्यसि नाशं प्राप्नोषीत्यर्थः यस्मादहङ्कारात् न योत्स्य इति मन्यसे इति ते व्यवसायः निश्चयः मिथ्या एव स्यात् यतः अहङ्काररूपा प्रकृतिरेव त्वां नियोक्ष्यति अर्थात् यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे स एव अहं प्रकृतिः त्वां नियोजयति इति तात्पर्य्यम् ॥ ५९ ॥

तदेवाह—स्वभावजेनेति—श्लोकः ।

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्त्तुं नेच्छासि यन्मोहात् करिष्यस्यवशोऽपि तत् ॥

॥ टीका ॥

स्वस्वभावजं यत्कर्म तन्निबन्धनरूपं अर्थात् निज-स्वभावजं कर्माणि पूर्वोक्तानि यत् त्यागविषये त्रिगुण-सङ्गात् त्रिधा कथितं तथा संन्यासविषये यन्निगुणा-त्मकं ज्ञानं कर्म कर्ता बुद्धिः धृतिश्च सुखं च वर्णा-श्रमधर्मं च इत्यादि स्वभावजकर्माणि बन्धकारकरू-पाणि तत्प्रमाणं यथाह—भागवते प्रथमं "यदा सं-मोहितो जीवो मायया त्रिगुणात्मना । परोऽपि मनुते-ऽनर्थः तत्कृतं चाधिपद्यते" ॥ एतदेव मया गुणसङ्गात् अनर्थरूपं वर्णितं तदनर्थोपशमनार्थं यदाह—भक्ति-योगरधोक्षजे तदेवाह—ईश्वर इति—

॥ श्लोकः ॥

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥६१॥

॥ टीका ॥

ईश्वरः निजमायया सर्वभूतानि यन्त्रारूढानि इव भ्रामयन् अत्र यन्त्रारूढरूपाः अहङ्काराश्रिता जीवाः

माया नाम परा पश्यन्ति मध्यमावैषरी चातुर्विधा-वाणीरूपा मायाद्वारा ब्रह्मादिसर्वभूतान् भ्रामयन् त-द्यथाह—भागवत पञ्चम प्रियव्रतं प्रति ब्रह्मणो वाक्यं, "यद्वाचितन्त्यां गुणकर्मदामभिः सुदुस्तरैर्वत्स वयं सुयोजिताः। सर्वे वहामो बलिमीश्वराय प्रोतानसीव द्विपदे चतुष्पदः॥ १४ ॥ ईशाभिसृष्टं ह्यवरुंमहेङ्ग दुःखं सुखं वा गुणकर्मसङ्गात्। आस्थाय तत्तद्यदयुंक्त नाथ श्चक्षुष्मतान्धा इव नीयमानाः ॥ १५ ॥ अर्थात् यदीश्वरस्य वाणीरूपतन्त्यां दामन्यां वयं सर्वे नियोजिताः सन्तः बलिं वहामः यथा द्विपदानां चतुष्पदाः भारं वहन्ति ॥ १४ ॥ अर्थात् सुखदुःखादिभोगमपि ईश्वर एव ददाति तद्दत्तमेव भुञ्जामः यथा चक्षुष्मान्पुरुषः अन्धपुरुषं यत्र नयति स तत्रैव गच्छति यथा द्विपदः चतुष्पदान् यत्तृणादिकं भक्षणार्थं ददाति ते चतुष्पदाः तदेवाश्नाति तथैव स परमेश्वरः त्रिकालज्ञज्ञानयुक्तः अतएव चक्षुष्मान् पुरुषः, भूते भविष्यति वर्त्तमानेपि भवितव्यं न जानाति अतएव अन्धः इत्यर्थः ॥६१॥

अतएव अज्ञानिजनानां सर्वज्ञस्य शरणनियोजनार्थे आह—तमेवेति—श्लोकः।

तमेव शरणं गच्छ सर्वभावेन भारत।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥

॥ टीका ॥

सर्वभावेन अर्थात् "त्वमेव माता च पिता त्वमेव, त्वमेव बन्धुश्च सखा त्वमेव । त्वमेव विद्या द्रविणं त्वमेव, त्वमेव सर्वं मम देव देव ॥ इति सर्वभावेन मत्प्रसादात् शाश्वतं शान्ति स्थानं प्राप्स्यसि यद्भागवते दशमे लक्षणं आश्रयरूपं वर्णितं स एव परमशांतिपदं अपाणिपादौ इति ॥ ६२ ॥

उक्तशान्तिरूपं आश्रयपदस्य माहात्म्यमाह—

इतीति—श्लोकः ।

इति ते ज्ञानमाख्यातं गुह्यात् गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥६३॥

॥ टीका ॥

एतच्छ्रुत्वा सुखदुःखादिभोगहेतु चिन्तायुक्तत्वाद्भगवन्मुखनिरीक्ष्यमाणं अर्जुनं प्रति पुनर्भगवानाह—

सर्वेति—श्लोकः ।

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोसि मे दृढमितिस्ततो वक्ष्यामि ते हितम्।६४।
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोसि मे ॥६५॥

॥ टीका ॥

अत्यन्तगुह्यतमं वचनं शृणु इष्टोसि त्वं मे प्रियोऽसि अतस्ते हितं वक्ष्यामि ॥ ६४ ॥ मन्मना भव मद्भक्तो भव मद्याजी भव मामेव नमस्कुरु तर्हि मामेव त्वं प्राप्स्यसि इति मदीयप्रतिज्ञां त्वं जानि अर्थात् मन्निन्दकाः शिशुपालादयः युष्मद्यज्ञे ममैव हताः सन्तः मद्धामं प्राप्ताः तथा पूतनादयोऽपि मत्हिंसार्थाः मत्सकाशादुत्तमतमां गतिं प्राप्ताः त्वं तु मम प्रियोऽसि तर्हि किं बहु वक्तव्यं अर्थात् किञ्चिदपि चिन्तां न कुर्वित्यर्थः ॥ ६५ ॥

तर्हि यत्कर्त्तव्यं तदेवाह—सर्वधर्मान्परित्यज्येति—

॥ श्लोकः ॥

**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।६६।**

॥ टीका ॥

वर्णाश्रमादिधर्माणि मोक्षादिचतुष्टयकामनासिद्धिहेतुरेव वर्णितं तस्मात् यत् धर्मत्यागमाह—तत्कामनात्यागहेतु एव ज्ञेयः तद्यथाह—द्वितीयाध्याये विहाय कामान् इत्यादि अतएव पूर्वमेव ईश्वरः सर्वभूतानामित्युपदेशेन अहं मम भावमपि त्यक्त्वा तथात्र

पूर्वद्वितीयाध्यायोक्तोपदेशं विस्तारितमतेन सिद्धान्तं कृत्वा एतदेव कवीश्वराणां कविकोविदानां परमचातुर्य्यं विचारणीयम् ॥ ६६ ॥

अथोक्तज्ञानस्य साधने अधिकारित्वमाह—

इदमिति—श्लोकः ।

इदं तेनातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥६७॥

॥ टीका ॥

अतपस्काय नाम सकामाय प्रमाणं ब्रह्मसत्यं जगन्मिथ्या इत्यपरोक्षज्ञानाग्निना ब्रह्मादीनामैश्वर्य्यं सन्तप्यमेव तपः अभक्ताय भगवद्भक्तिप्रेमरहिताय अशुश्रूषवे श्रवणविषये चतुराय यो मां अभ्यसूयति अर्थात् मदीयत्रिकालज्ञज्ञानयुक्तं स्वरूपं मनुष्यदेहवन्मन्यते यथाह—सप्तमे 'वेदाहं समतीतानि वर्त्तमानानि चार्जुन । भविष्याणि च भूतानि मां तु वेद न कश्चन:' ॥ एतत्प्रमाणद्वारा त्रिकालज्ञज्ञानसङ्गात् जीवात्मा ईश्वरो न भवति किन्तु परमानन्दस्वरूप एव ईश्वरः स एव जीवात्माद्वारा अक्षरात्मका वाणी प्रकाशकत्वात् जीवात्मनः सङ्गात् सच्चिदानन्दस्वरूपो भवति एवं भूतं मदीयस्वरूपं यो न मन्यते तत्प्रति मदीयमिदमुपदेशं न वक्तव्यमित्यर्थः ॥ ६७ ॥

इत्यनेन अनधिकारिणं प्रति वर्णयित्वा इदानीं अधिकारिणं प्रत्याह—य इति—श्लोकः ।

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥६८॥

॥ टीका ॥

एतदुक्तं गुह्यतमं गीताज्ञानं श्रद्धायुक्तभक्तेषु उपदेशनीयं स एव श्रद्धायुक्तो भक्तः ज्ञानवैराग्ययुतां परां भक्तिं लब्ध्वा मां एव प्राप्स्यसे अर्थान्मतुल्यानिष्कामो भवति इत्यर्थः ॥ ६८ ॥

अथोक्तपराभक्तेर्माहात्म्यमाह—न चेति—श्लोकः ।

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥६९॥

॥ टीका ॥

तस्मात् पराभक्तियुक्तपुरुषात् मे अन्यप्रियकृत् उत्तमः पुरुषो नास्ति तस्यापि मां विना अन्यः कश्चित् प्रियतरो नास्तीति भावः ॥ ६६ ॥

अथ परमभक्तनां प्रियकारणमाह—अध्येष्यस इति-
॥ श्लोकः ॥

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टःस्यामिति मे मतिः ॥७०॥

॥ टीका ॥

यः पुरुषः आवयोरिमं धर्म्यं संवादं पठते तस्य ज्ञानयज्ञद्वारेणाहं इष्टःस्यां यतः जाग्रतस्वप्नसुषुप्ति इति त्रयावस्थानां वेत्ता द्रष्टा ज्ञाता प्रकाशकः स एव तुरीयरूपं मन्यते इति वेदान्ते निरूपितं तदाह—जाग्रतस्वप्नसुषुप्तिषु स्फुटतरा यासां विदुर्जृम्भते ब्रह्मादीनां पिपीलिकां तननुषु प्रोता जगत्साक्षिणी सैवाहं न च दृश्य वस्त्विनिदृढप्रातिज्ञापि यस्यास्ति वै चाण्डालस्तु सद्द्विजस्तु गुरुरित्येषामनीषां मम इति श्रुतिवेदान्ते तथात्रापि अव्यक्ताव्यक्तयः सर्वाः प्रभवन्त्याहरागमे रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके इत्यादि अत्र अव्यक्तावस्था रात्रिरूपं व्यक्तावस्थादिवसरूपं तदऽव्यक्तावस्था सुषुप्तिरूपं व्यक्तावस्था जाग्रतरूपं स एव भूतग्रामं नाम दशेन्द्रियपञ्चभूतमनश्च इति षोडशकलात्मकं भूतग्रामं ब्रह्मादिपिपीलिकापर्यन्तं नानाभेदप्रकारं स्वप्नस्वरूपं निर्भेदतत्त्वे यत् नानात्वदर्शनं तदेव स्वप्नरूपं एतत्त्रयावस्थानां यद्द्रष्टा साक्षीप्रकाशकः स एव तुरीयरूपः परमेश्वरः त्रिकालज्ञज्ञानयुक्तः तत् षोडशकलात्मक सर्वयोनयः वर्षात्मक कालवशेन व्यक्ताव्यक्तयो भवन्ति एतदेव ज्ञानं

परमेश्वरं विना ब्रह्मादयोपि न जानन्ति अतएव ए-
तदुक्तज्ञानयज्ञद्वारा भक्तानामहं प्रियो भवामीत्यर्थः ॥
उक्तज्ञानस्य माहात्म्यमाह—श्रद्धावानिति—श्लोकः।

श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोपि मुक्तः शुभाँल्लोकान् प्राप्नुयात्पुण्यकर्मणाम् ॥

॥ टीका ॥

श्रद्धायुक्तपुरुषस्य अशुद्धमपि पाठं श्रुत्वा यः प-
ण्डितः न निन्दयति सोपि शुभांल्लोकान् प्राप्नोति ॥७१॥

उक्तमुपदेशं अर्जुनंप्रति श्रुतमश्रुतं पृच्छति—
कच्चिदिति—श्लोकः ।

कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनञ्जय ॥७२॥

॥ टीका ॥

हे पार्थ त्वया कच्चित् श्रुतं न वा यदि श्रुतं तर्हि
अज्ञानसंमोहो प्रनष्टः न वा तत्कथयेति भावः ॥७२॥

तदुत्तरमाह—अर्जुन उवाच—श्लोकः ।

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।
स्थितोस्मि गतसन्देहः करिष्ये वचनं तव ॥७३॥

॥ टीका ॥

त्वन्मुखादद्वैतामृतज्ञानं श्रुत्वा द्वैतरूपो मोहो न-

ष्टःस्यात् त्वदीयाश्रयरूपस्याधारेणाहं स्थितोऽस्मि गत-संशयः करिष्ये वचनं अत्र गूढाभिप्रायं अर्थात् वाणी प्रेरकत्वात् त्वद्दत्तवचनं वदिष्ये ॥ ७३ ॥

उक्तसंवादं धृष्टराष्ट्रं प्रति सञ्जय उवाच—श्लोकः ।

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥
व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ।
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥

॥ टीका ॥

श्रीकृष्णार्जुनयोरद्भुतं संवादं व्यासप्रसादादहं श्रु-तवान् ॥ ७५ ॥

संवादस्य माहात्म्यमाह—राजन्निति—श्लोकः ।

राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥७६॥
तच्च संस्मृत्य संस्मृत्य रूपमत्युद्भुतं हरेः ।
विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः ॥
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवानीतिर्मतिर्मम ॥७८॥

॥ टीका ॥

केशवार्जुनयोः संवादं पवित्रं पुनः पुनः संस्मृत्य मुहुर्मुहुर्हृष्यामि ॥ ७६ ॥ च पुनः हरेः श्रीभगवद्भक्तः रूपं दिव्यं मन्त्रमयरूपं संस्मृत्य पुनः पुनः विस्मयो मे महान् तत्संस्मृत्य अहं हृष्यामि ॥ ७७ ॥ यत्र साक्षात्कारं परमेश्वरः त्रिकालज्ञज्ञानयुक्तः यत्र पार्थः धनुर्धरः तत्रस्थाने विजयविभूतिः श्रीनीतिः भक्तिः ध्रुवा भवति इति मे मतिः ॥ ७८ ॥

इति श्रीमद्भगवद्गीताटीकायां श्रीपुरुषोत्तमदास-
कृतायां अष्टदशोऽध्यायः ॥ १८ ॥

